सुयशा भक्तः सीमंधरो नृपः ॥ ३७ ॥ ब्रह्मा यक्षश्चतुर्वक्त्रः श्वेतवर्ण-स्त्रिलोचनः । पद्मासनो दिशोऽष्टापि पालयन्नष्टभिर्भुजैः ॥ ३८ ॥ मुद्गरं मातुलिंगं च पाशकं चाभयं तथा । अपसव्ये दधात्येष स्पष्टं पाणिच-तुष्टये ॥ ३९ ॥ नकुलं च गदामेव-मंकुशं चाक्षसूत्रकं । दधाति धीर-धुर्योऽयं वामे पाणिचतुष्टये ॥ ४० ॥ देव्यशोका नीलवर्णा पद्मासीना चतुर्भुजा । दधाना वरदं पाश-मपसव्यकरद्वये ॥ ४१ ॥ वामपाणिद्वये चैषा दधती फलमंकुशं । शीतलप्रभुभक्तानां वितनोति समीहितं ॥ ४२ ॥ इति श्रीशीतलः ॥

बभूव पुष्करद्वीपे विजये रमणीयके । प्राग्विदेहे शुभापुर्यां नलि-नीगुल्मभूपतिः ॥ ४३ ॥ वज्रदत्तगुरोः पार्श्वे स स्वीकृत्य व्रतं सुधीः । देवोऽभूदच्युतस्वर्गे द्वाविंशत्यर्णवस्थितिः ॥ ४४ ॥ शून्यदेशे सिंहपुर्यां प्रेयस्यां विष्णुभूपतेः । विष्णुनाम्न्यां सुतो जज्ञे श्रेयांस इति विश्रुतः ॥ ४५ ॥ ज्येष्ठस्य श्यामला षष्ठी द्वादशी च त्रयोदशी । फाल्गुनस्या-

---

भक्त थयो. ( ३७ ) ब्रह्मा नामनो यक्ष चार मुखवाळो, श्वेत वर्णवाळो, त्रण लोचनवाळो, पद्मना आसनवाळो, आठ भुजाओवडे आठे दिशाओने पाळनारो, ( ३८ ) चार जमणा हाथमां मुद्गर, मातुलिंग, पाश ने अभयने धारण करनारो ( ३९ ) तथा डाबा चार हाथमां नकुल, गदा, अंकुश ने अक्षसूत्रने धारण करनारो धीरजनोमां धुरंधर थयो. *( ४० ) देवी अशोका नामनी नील वर्णवाळी, पद्मना आसनवाळी, चार भुजावाळी,* जमणा बे हाथमां वरद ने पाश अने डाबा बे हाथमां फळ ने अंकुश धारण करनारी शीतळप्रभुना भक्तोना इच्छितने पूरनारी थई. ( ४१–४२ ) इति श्रीशीतलः ॥

श्रीश्रेयांसनाथवर्णन—पुष्करवरद्वीपमां पूर्व महाविदेहमां रमणीयक नामना विज-यमां शुभा नामनी नगरीमां नलिनीगुल्म नामे राजा हता. ( ४३ ) ते वज्रदत्त गुरुनी पासे चारित्र अंगीकार करीने बारमा अच्युत कल्पमां २२ सागरोपमने आउखे देव थया. ( ४४ ) त्यांथी च्यवीने शून्य देशमां सिंहपुरीमां विष्णु नामे राजानी विष्णु नामनी प्रियाना पुत्रपणे उत्पन्न थया, ते श्रेयांसनाथना नामथी प्रसिद्ध थया. ( ४५ ) ज्येष्ठ वदि ६, फाल्गुन वदि १२, फाल्गुन वदि १३, माह वदि ०)) अने श्रावण वदि ३–९ पांच

सिते माघमासस्य च कुहूः किल ॥ ४६ ॥ तृतीया श्रावणे कृष्णा कल्याणकदिनाः प्रभोः । चतुर्षु श्रवणं धिष्ण्यं धनिष्ठा पंचमे पुनः ॥४७॥ गर्भे स्थितिः प्रभोर्मासा नव षड्वासराधिकाः । खड्गी जीवः प्रभोर्लक्ष्म राशिर्मकरसंज्ञकः ॥ ४८ ॥ चतुरशीत्याब्दलक्षैः पूर्वोक्ताब्दैः शतेन च । अब्धीनामूनया वार्द्धि–कोट्या शीतलनिर्वृतेः ॥ ४९ ॥ श्रेयांसस्याभवज्जन्म तदा तुर्यारकस्य च । शिष्यते स्मार्णवशतं स्वायुःपूर्वोक्तवर्षयुक् ॥ ५० ॥ शय्यामाक्रामत्सुराधि–ष्ठितां गर्भस्थिते प्रभौ । निर्विघ्नमंबेति श्रेय–स्करत्वात्तादृशाभिधः ॥ ५१ ॥ कुमारत्वेऽब्दलक्षाणि निर्दिष्टान्येकविंशतिः । द्विचत्वारिंशदब्दानां लक्षाणि राज्यवैभवे ॥ ५२ ॥ लक्षाणि व्रतपर्याये चाब्दानामेकविंशतिः । एवं लक्षाणि चतुर–शीतिः सर्वायुराहितं ॥ ५३ ॥ छाद्मस्थ्यं मासयोर्युग्मं शिबिका विमलप्रभा । सिद्धार्थाख्यपुरे नंदः पारणां प्रथमां ददौ ॥ ५४ ॥ तिंदुको ज्ञानवृक्षः स्या–दशीतिधनुरुच्छ्रितं । वपुः षट्सप्ततिश्चोक्ताः प्रभोर्गणभृतः श्रुते ॥ ५५ ॥ प्रभोश्चतुरशीतिश्च सहस्राणि मुमुक्षवः । लक्षमेकं

---

कल्याणकना दिवसो जाणवा. चार कल्याणकमां श्रवण नक्षत्र अने पांचमा कल्याणकमां धनिष्ठा नक्षत्र जाणवुं. ( ४६–४७ ) गर्भस्थिति नव मास ने छ दिवसनी, खड्गी ( गेंडा )नुं लांछन अने मकरराशि जाणवी. ( ४८ ) शीतलनाथना निर्वाण पछी ८४ लाख वर्ष अने पूर्वे कहेला छे तेटला ( ६६ लाख २६ हजार ) वर्ष अने सो सागरोपमे न्यून एक क्रोड सागरोपमे श्रेयांसनाथनो जन्म थयो. त्यारे चोथो आरो सो सागरोपम, स्वायु अने पूर्वोक्त (६५ लाख ८४ हजार) वर्ष अधिक बाकी रह्यो हतो. (४९–५०) प्रभु गर्भमां हता त्यारे सुराधिष्ठित शय्यानुं माताए निर्विघ्नपणे आक्रमण कर्युं तेथी अने प्रभुना श्रेयस्कारीपणाथी श्रेयांस नाम स्थापन कर्युं. ( ५१ ) कौमारपणामां २१ लाख वर्ष, राज्यवैभवमां ४२ लाख वर्ष ( ५२ ) अने व्रतपर्यायमां २१ लाख वर्ष एम कुल ८४ लाख वर्षनुं प्रभुनुं आयुष्य संपूर्ण थयुं. ( ५३ ) छद्मस्थपणे बे मास ज रह्या. दीक्षा अवसरे शिबिका विमलप्रभा नामनी अने प्रथम पारणुं सिद्धार्थ नामना नगरमां नंद राजाने त्यां कर्युं. ( ५४ ) ज्ञानवृक्ष तिंदुक नामनुं हतुं अने ८० धनुष्यप्रमाण शरीर हतुं. प्रभुने ७६ गणधरो, ( ५५ ) ८४००० मुमुक्षुओ ( साधुओ ) एक लाख ने त्रण हजार साध्वीओ,

च साध्वीनां सहस्रत्रितयाधिकं ॥ ५६ ॥ श्राद्धा लक्षद्वयमथै–कोनाशीतिसहस्रकाः । चतुर्लक्ष्यष्टचत्वारि–शत्सहस्राण्युपासिकाः ॥ ५७ ॥ शतानि पंचषष्टिश्चा–भूवन्निःशेषवेदिनां । षट् सहस्राणि शमिनां मनःपर्यायवेदिनां ॥ ५८ ॥ स्फुरद्वैक्रियलब्धीना–मेकादश सहस्रकाः । सहस्रा वादिनां पंचा–वधिज्ञानभृतां च षट् ॥ ५९ ॥ सच्चतुर्दशपूर्वाणां शतान्यासंस्त्रयोदश । कौस्तुभो मुख्यगणभृ–द्धारिणी च प्रवर्त्तिनी ॥ ६० ॥ त्रिपृष्ठवासुदेवोऽभू–त्प्रभुर्भक्तनृपः प्रभोः । यक्षश्च मनुजाभिख्य ईश्वराख्यो मतांतरे ॥ ६१ ॥ स त्रिनेत्रः श्वेतवर्णो वृषारूढश्चतुर्भुजः । मातुलिंगगदायुक्त–सद्दक्षिणकरद्वयः ॥ ६२ ॥ नकुलं चाक्षसूत्रं च दधद्वामकरद्वये । श्रियं श्रेयांसभक्तानां वितनोति समीहितं(तां) ॥ ६३ ॥ श्रीवत्साख्या प्रभोर्देवी मानवी वा मतांतरे । सिंहासीना गौरवर्णा सा निर्दिष्टा चतुर्भुजा ॥ ६४ ॥ धत्ते दक्षिणयोः पाण्यो–र्वरदं मुद्गरं च सा । धत्ते च वामयोः पाण्योः क्रमात्कलशमंकुशं ॥ ६५ ॥ इति श्रीश्रेयांसः ॥

विजये मंगलावत्यां पुष्करप्राग्विदेहगे । सद्रत्नसंचयापुर्यां राजा

---

( ५६ ) २७९००० श्रावको, ४४८००० श्राविकाओ, ( ५७ ) ६५०० केवळज्ञानी, ६००० मनःपर्यवज्ञानी, ( ५८ ) ११००० वैक्रियलब्धिवाळा, ५००० वादीओ, ६००० अवधिज्ञानी, ( ५९ ) १३०० चौदपूर्वी थया. कौस्तुभ नामना मुख्य गणधर, धारिणी नामे प्रवर्त्तिनी ( ६० ) अने त्रिपृष्ठ वासुदेव प्रभुनो परम भक्त थयो. मनुज नामनो मतांतरे ईश्वर नामनो यक्ष, ( ६१ ) त्रण नेत्रवाळो, श्वेत वर्णवाळो, वृषभना वाहनवाळो, चार भुजावाळो, जमणी बे भुजामां मातुलिंग ने गदा धारण करनारो ( ६२ ) अने डाबी बे भुजामां नकुळ ने अक्षसूत्रने धारण करनारो, श्रेयांसनाथना भक्तोना इच्छित पूरनारो थयो. ( ६३ ) प्रभुनी देवी श्रीवत्सा नामनी मतांतरे मानवी नामनी सिंहना आसनवाळी, गौरवर्णवाळी, चार भुजावाळी, बे जमणा हाथमां वरद ने मुद्गर अने बे डाबा हाथमां कळश ने अंकुशने धारण करनारी थई. ( ६४–६५ ) इति श्रीश्रेयांसः ॥

श्रीवासुपूज्यवर्णन—पुष्करवरद्वीपना पूर्व महाविदेहमां मंगळावती विजयमां रत्न-

पद्मोत्तरोऽभवत् ॥ ६६ ॥ गुरोः श्रीवज्रनाभस्य पार्श्वे स प्राप्य संयमं । सुरोऽभूत्प्राणतस्वर्गे विंशत्यर्णवजीवितः ॥ ६७ ॥ चंपापुर्यामंगदेशे वसुपूज्यमहीपतेः । राज्ञ्या जयायास्तनुजो वासुपूज्यस्ततोऽभवत् ॥ ६८ ॥ उज्ज्वला नवमी ज्येष्ठे भूतेष्टा फाल्गुने शितिः । फाल्गुनेऽमावसी माघे द्वितीया च समुज्ज्वला ॥ ६९ ॥ शुक्लाषाढस्य भूतेष्टा कल्याणकदिनाः प्रभोः । आहिर्बुध्न्यं पंचमे भं चतुर्षु शततारिका ॥ ७० ॥ दिनानि विंशतिर्मासा–श्चाष्टौ गर्भस्थितिः प्रभोः । राशिः कुंभो लांछनं च महिषः किल कीर्त्तितः ॥ ७१ ॥ पूज्यते वसुभिः शक्रै–र्वासुपूज्यः स्मृतस्ततः । वसुपूज्यनृपापत्य–मिति वा तादृशाह्वयः ॥ ७२ ॥ द्विसप्तत्यब्दलक्षोनै–श्चतुष्पंचाशताब्धिभिः । जन्माभूद्वासुपूज्यस्य श्रीमच्छ्रेयांसनिर्वृतेः ॥७३॥ षट्चत्वारिंशदब्धीनां शेषस्तुर्यारके तदा । वेदनाग ( ८४ ) सहस्राब्द–बाणर्त्तु ( ६५ ) लक्षवर्षयुक् ॥ ७४ ॥ अष्टादशाब्दलक्षाणि कुमारत्वेऽवसद्विभुः । ततः प्रपेदे चारित्रं पृथिवीशिबिकां श्रितः ॥ ७५ ॥ चतुष्पंचाशदब्दानां लक्षाणि व्रतमादधौ । द्विसप्तत्यब्दलक्षायु–र्धनुस्सप्तति-

---

संचया नगरीमां पद्मोत्तर नामे राजा हता. ( ६६ ) तेओ वज्रनाभ गुरुपासे संयम ग्रहण करीने प्राणत देवलोकमां वीश सागरोपमने आउखे उत्पन्न थया. ( ६७ ) त्यांथी च्यवीने अंगदेशमां चंपापुरी नगरीमां वसुपूज्य राजा ने जया राणीना पुत्र वासुपूज्य नामे तीर्थंकर थया. ( ६८ ) ज्येष्ठ शुदि ९, फाल्गुन वदि १४, फाल्गुन वदि ०)), माघ शुदि २ अने अषाढ शुदि १४–आ पांच कल्याणकना दिवसो जाणवा. चार कल्याणकमां शततारिका ( शतभिषा ) ने पांचमा कल्याणकमां उत्तराभाद्रपद ( आहिर्बुध्न ) नक्षत्र जाणवुं. ( ६९–७० ) आठ मास ने वीश दिवसनी गर्भस्थिति, कुंभराशि अने महिषनुं लांछन जाणवुं. ( ७१ ) इंद्रे वसुवडे पूजेला होवाथी तेम ज वसुपूज्य राजाना अपत्य होवाथी वासुपूज्य नाम स्थापन कर्युं. ( ७२ ) श्रेयांसनाथना निर्वाणथी ७२ लाख वर्षे ऊन ५४ सागरोपमे वासुपूज्यनो जन्म थयो. ( ७३ ) ते वखते चोथो आरो ६५ लाख ८४ हजार वर्षे न्यून अने ७२ लाख वर्षे अधिक ४६ सागरोपम बाकी रह्यो हतो. (७४) अढार लाख वर्ष कुमारावस्थामां व्यतीत करीने पछी पृथिवी नामनी शिबिकामां आरोहण करीने चारित्र अंगीकार कर्युं. ( ७५ ) ५४ लाख वर्ष चारित्र धारण कर्युं. एकंदर ७२ लाख वर्षनुं आयुष्य अने ७० धनुष्यनुं शरीर हतुं. ( ७६ ) प्रथम पारणुं महापु-

मुच्छ्रितः ॥ ७६ ॥ महापुरे सुनंदाख्यः प्रथमां पारणां ददौ । छाद्म-स्थ्यमेको मासोऽभूद् ज्ञानद्रुः पाटलाभिधः ॥ ७७ ॥

जगत्प्रभोर्गणभृतः षट्षष्टिः साधवः पुनः । द्विसप्ततिः सहस्राणि साध्वीनां लक्षमेव च ॥ ७८ ॥ सहस्राः पंचदश च द्वे लक्षे श्रावकोत्तमाः । चतुर्लक्षी श्राविकाणां षट्त्रिंशच्च सहस्रकाः ॥ ७९ ॥ सर्वज्ञानां सहस्राः षट् मनोज्ञानवतामपि । अवधिज्ञानिनां पंच सहस्राः सचतुःशताः ॥ ८० ॥ चतुर्दशपूर्वभृतां सहस्रं द्विशतोत्तरं । स्फुरद्वैक्रियलब्धीनां सहस्राणि दशाभवन् ॥ ८१ ॥ वादिनां सप्त चत्वारिं-शच्छतानि मतांतरे । द्विचत्वारिंशच्छतानि तत्त्वं जानाति केवली ॥ ८२ ॥ सुभूमो गणभृन्मुख्यो धरणी च प्रवर्तिनी । द्विपृष्ठवासुदेवश्च नृपश्चरणसेवकः ॥८३॥

यक्षः कुमारः श्वेतांगः श्वेतयानश्चतुर्भुजः । मातुलिंगबाणशालि-सद्दक्षिणकरद्वयः ॥ ८४ ॥ कोदंडनकुलाभ्यां च शोभितो वामहस्तयोः । पिपर्त्ति श्रीवासुपूज्य-जिनसेविसमीहितं ॥ ८५ ॥ प्रवराख्या प्रभोर्देवी चंडाख्या च मतांतरे । चतुर्भुजा श्यामवर्णा सत्तुरंगमवाहना ॥ ८६ ॥

---

रमां सुनंद नामना राजाने त्यां कर्युं. छद्मस्थपणुं एक मासनुं ज हतुं ने ज्ञानवृक्ष पाटल नामे हतुं. ( ७७ ) ( वासुपूज्यस्वामीए विवाह के राज्य स्वीकार्या शिवाय ज चारित्र ग्रहण कर्युं हतुं एम केटलाक कहे छे अने केटलाक विवाह कर्यो हतो एम कहे छे. )

जगत्प्रभु वासुपूज्यने ६६ गणधर, ७२००० साधुओ, एक लाख साध्वीओ, (७८) २१५००० श्रावको, ४३६००० श्राविकाओ, ( ७९ ) ६००० केवळज्ञानीओ, ६००० मनःपर्यवज्ञानीओ, ५४०० अवधिज्ञानी, ( ८० ) १२०० चौदपूर्वी, १०००० वैक्रियलब्धिवाळा ( ८१ ) अने ४७०० मतांतरे ४२०० वादीओ थया. तत्त्वकेवळी जाणे. ( ८२ ) सुभूम नामे मुख्य गणधर, धरणी नामे प्रवर्त्तिनी अने द्विपृष्ठ नामे वासुदेव चरणसेवक थयो. ( ८३ )

कुमार नामनो यक्ष श्वेत वर्णवाळो, श्वेत वाहनवाळो, चार भुजावाळो, दक्षिणनी बे भुजामां मातुलिंग ने बाण अने डाबी बे भुजामां कोदंड ने नकुलने धारण करनारो श्रीवासुपूज्यना सेवकोना समीहितने पूरनारो थयो. ( ८४-८५ ) प्रवरा नामे मतांतरे चंडा नामे देवी चार भुजावाळी, श्याम वर्णवाळी, शोभिता अश्वना वाहनवाळी, बे

दधाति वरदं शक्तिं भुजयोरपसव्ययोः। दधाति सव्ययोः पुष्पं गदां चैपा महाशया ॥ ८७ ॥ इति श्रीवासुपूज्यः ॥

धातकीखंडभरते महापुर्यां नृपोऽभवत्। पद्मसेनाह्वयः सर्व–गुप्तर्षेः सोऽग्रहीद्व्रतं ॥ ८८ ॥ ततः सुरः सहस्रारे–ऽष्टादशार्णवजीवितः। भूत्वा पांचालदेशेऽभू–त्पुरे कांपील्यनामनि ॥ ८९ ॥ श्यामाराज्ञीकुक्षिरत्नं कृतवर्ममहीपतेः। पुत्रः पवित्रचारित्र–विमलो विमलाह्वयः ॥ ९० ॥ वैशाखद्वादशी शुक्ला माघे शुक्ला तृतीयिका। माघे चतुर्थी शुक्ला च पौषे षष्ठी तथोज्ज्वला ॥ ९१ ॥ आषाढे सप्तमी कृष्णा कल्याणकदिनाः प्रभोः। आहिर्बुध्नं चतुर्षु स्या–द्धिष्ण्यं पौष्णं च पंचमे ॥ ९२ ॥ मासा अष्टौ दिनान्येक–विंशतिर्गर्भस्थितिः। राशिर्मीनाह्वयो लक्ष्म शूकरः कीर्त्तितः प्रभोः ॥ ९३ ॥ गर्भस्थेऽस्मिन्मातुरास्तां मत्यंगे विमले इति। अंतर्बहिश्च विमल–तया वा विश्ववर्यया ॥ ९४ ॥ विमलो नामधेयेना–देयनामा स कीर्त्तितः। षष्टिचापोन्नतः षष्टि–लक्षाब्दायुर्जगद्विभुः

---

जमणा हाथमां वरद ने शक्ति अने डाबा बे हाथमां पुष्प ने गदाने धारण करनारी, सुंदर आशयवाळी थइ. (८६–८७) इति श्रीवासुपूज्यः ॥

श्रीविमळनाथ वर्णन—धातकीखंडना भरतक्षेत्रमां महापुरी नामनी नगरीमां पद्मसेन नामना राजा हता. तेमणे सर्वगुप्त मुनिनी पासे चारित्र ग्रहण कर्युं. (८८) त्यांथी सहस्रार नामना आठमा देवलोकमां १८ सागरोपमने आउखे देव थया. त्यांथी च्यवीने पांचाळदेशमां कांपील्यपुर नगरमां कृतवर्म राजा अने श्यामा राणीना पुत्र पवित्र चारित्रवडे विमळ (निर्मळ) एवा विमळ नामना तीर्थंकर थया. (८९–९०) वैशाख शुदि १२, माघ शुदि ३, माघ शुदि ४, पौष शुदि ६ अने आषाढ वदि ७–ए पांच कल्याणकनी तिथिओ जाणवी. चार कल्याणक उत्तराभाद्रपद नक्षत्रमां अने पांचमुं कल्याणक पौष्ण (पुष्य) नक्षत्रमां जाणवुं. (९१–९२) ८ मास ने २१ दिवसनी गर्भस्थिति, मीनराशि अने शूकरनुं लांछन जाणवुं. (९३) प्रभु गर्भमां हता त्यारे मातानी बुद्धि अने अंग निर्मळ थवाथी तेम ज अंतर ने बाह्य विश्वमां श्रेष्ठ एवी निर्मळतावाळा होवाथी विमळ नामना आदेयनामवाळा जगमां प्रसिद्ध थया. साठ धनुष्यनुं शरीर अने ६० लाख वर्षनुं प्रभुनुं आयुष्य हतुं. (९४–९५) श्रीवासुपूज्यना निर्वाणथी साठ लाख वर्षे न्यून

॥ ९५ ॥ युग्मं ॥ श्रीवासुपूज्यनिर्वाणा–त्रिंशता सागरोपमैः । पष्टिलक्षशरन्न्यूनै–र्जन्माभूद्विमलप्रभोः ॥ ९६ ॥ तुर्यारकेऽब्धयः शेषाः षोडश प्रभुजन्मनि । पूर्वोदितैर्वर्षलक्षै–स्तत्सहस्रैश्च साधिकाः ॥ ९७ ॥ तुर्यारकस्य शेषो यो जिनजन्मनि वक्ष्यते । इतः प्रभृति स स्वस्वायुषाभ्यधिक ऊह्यतां ॥ ९८ ॥ लक्षाः पंचदशाब्दानां कुमारत्वेऽवसद्विभुः । लक्षाणि त्रिंशतं राज्ये लक्षाः पंचदश व्रते ॥ ९९ ॥ तत्र द्विमासी छाद्मस्थ्यं शिबिका च व्रतक्षणे । देवदिन्ना जयो धान्य–कटे प्रथमदायकः ॥ ६०० ॥ जंबूतरुतले स्वामी पंचमज्ञानमाप सः । निर्दिष्टाः सप्तपंचाश–द्विभोर्गणधरोत्तमाः ॥ ६०१ ॥ अयमावश्यकाभिप्रायः, समवायांगे तु षट्पंचाशद्गणधरा उक्ता इति ज्ञेयं. अष्टषष्टिः सहस्राणि साधूनां शीलशालिनां । लक्षमेकं च साध्वीनां शतैः साधिकमष्टभिः ॥ ६०२ ॥ लक्षद्वयं च श्राद्धानां सहस्रैरष्टभिर्युतं । चतुर्लक्षी श्राविकाणां सहस्रा जिनसंमिताः ॥ ३ ॥ शतानि पंचपंचाश–त्केवलज्ञानशालिनां । मनःपर्यायचिद्भाजां तावंत्येव शतानि च ॥ ४ ॥ 'अष्टचत्वारिंशदेव शतान्यवधिशालिनां । एकादशशतान्यस्य सचतुर्दशपूर्विणां ॥ ५ ॥ लसद्वैक्रियलब्धीनां सहस्राणि नवाभवन् । वादिनां

---

श्रीश सागरोपमे विमळप्रभुनो जन्म थयो. (९६) विमळनाथना जन्म वखते चोथो आरो १६ सागरोपम, ६० लाख वर्ष ने पूर्वे कहेला बीजा वर्षोए अधिक बाकी हतो. (९७) चोथो आरो जिनजन्ममां जे कहेवामां आवशे ते अहींथी मांडीने पोतपोताना आयुषे अधिक समजवो. (९८) पंदर लाख वर्ष प्रभु कौमारावस्थामां रह्या, ३० लाख वर्ष राज्यावस्थामां व्यतीत थया अने १५ लाख वर्ष चारित्रावस्थामां व्यतिक्रम्या. (९९) तेमां छद्मस्थावस्था बे मास प्रमाण जाणवी. व्रतावसरे शिबिका देवदिन्ना नामनी अने धान्यकटमां जयराजा प्रथम दाता ( पारणुं करावनार ) थया. (६००) जंबूवृक्षनी नीचे प्रभु केवळज्ञान पाम्या. तेमना परिवारमां ५७ गणधरो. (६०१) ( आ आवश्यकनो अभिप्राय छे. समवायांगमां तो ५६ गणधरो कहेला छे. ) चारित्रशाळी एवा ६८००० साधुओ, एक लाख ने आठ सो साध्वीओ (२) २०८००० श्रावको, ४२४००० श्राविकाओ, (३) ५५०० केवळज्ञानी, ५५०० मनःपर्यवज्ञानी, (४) ४८०० अवधिज्ञानी, ११०० चौदपूर्वी, (५) ९००० वैक्रियलब्धिवाळा अने ३६०० वादी थया. (६)

च सहस्राणि त्रीणि पट् च शताः किल ॥ ६ ॥ मंदरो मुख्यगणभृ-द्वराख्या च प्रवर्त्तिनी । स्वयंभूर्वासुदेवश्चा-भवद्भक्तनृपः प्रभोः ॥ ७ ॥ यक्षश्च षण्मुखः श्वेत-वर्णांगः शिखिवाहनः । स द्वादशभुजस्तीर्था-धिष्ठाता विमलप्रभोः ॥ ८ ॥ फलं चक्रं च बाणं च खड्गं पाशाक्षसूत्रके । स भुजेष्वपसव्येषु पट्सु धत्ते महाबलः ॥ ९ ॥ नकुलं चक्रमिष्वासं फलकं चांकुशाभये । भुजेषु पट्सु वामेषु धत्ते मत्तेभविक्रमः ॥ १० ॥ देव्यभूद्विजयाभिख्या विदिता च मतांतरे । वर्णतो हरिताभाभा पद्मासीना चतुर्भुजा ॥ ११ ॥ तनोति शं बाणपाश-युग्दक्षिणकरद्वया । धार्मिकाणां धनुर्नाग-शालिवामकरद्वया ॥ १२ ॥ इति श्रीविमलः ॥

नृप ऐरावतक्षेत्रे धातकीखंडवर्तिनि । रिष्टपुर्यामभूत्पद्म-रथश्चित्ररथान्मुनेः ॥ १३ ॥ संप्राप्य संयमं विंश-त्यब्ध्यायुः प्राणतेऽभवत् । सुरः स पुर्ययोध्यायां देशे कोशलनामनि ॥ १४ ॥ सिंहसेनस्य नृपतेः

---

मंदर नामना मुख्य गणधर, वरा नामनी प्रवर्त्तिनी अने स्वयंभू नामे वासुदेव प्रभुनो मुख्य भक्त थयो. (७) षण्मुख नामनो यक्ष श्वेत वर्णवाळो, मोरना वाहनवाळो अने बार भुजावाळो विमळ प्रभुना शासननो अधिष्ठाता थयो. (८) महाबळवान एवा तेना जमणा छ हाथमां फळ, चक्र, बाण, खड्ग, पाश अने अक्षसूत्र हता (९) ने डाबा छ हाथमां मदोन्मत्त हाथीनी जेवा पराक्रमवाळो ते नकुल, चक्र, धनुष्य, फलक, अंकुश नें अभयने धारण करतो हतो. (१०) देवी विजया नामनी मतांतरे विदिता नामनी थइ. ते हरिताल जेवा वर्णवाळी, पद्मना आसनवाळी, चार भुजावाळी, (११) जमणा बे हाथमां बाण ने पाश अने डाबा बे हाथमां धनुष्य ने नागने धारण करनारी, धार्मिक जनोना सुखने विस्तारनारी थइ. (१२) इति श्रीविमलः ॥

श्रीअनंतनाथवर्णन—धातकीखंडना ऐरावतक्षेत्रमां रिष्टपुरीमां पद्मरथ नामे राजा हता, तेमणे चित्ररथ नामना मुनिपासे चारित्र ग्रहण कर्युं. काळ करीने प्राणत देवलोकमां वीश सागरोपमने आउखे उत्पन्न थया. त्यांथी च्यवीने कोशलदेशमां अयोध्यापुरीमां सिंहसेन राजानी राणी सुयशानी कुक्षिथी उत्पन्न थएल अनंतजित् नामना पुत्र चौदमा

सुयशाकुक्षिसंभवः । तनयोऽनंतजिन्नाम्ना जिनेंद्रोऽभूच्चतुर्दशः ॥ १५ ॥ श्रावणे सप्तमी कृष्णा वैशाखस्य त्रयोदशी । भूतेष्टा चासिते पक्षे वैशाखस्य चतुर्दशी ॥ १६ ॥ चैत्रस्य पंचमी शुभ्रा कल्याणकदिनाः प्रभोः । पंचस्वप्येषु नक्षत्रं रेवती परिकीर्त्तितं ॥ १७ ॥ नव गर्भस्थितिर्मासाः प्रभोः षड्दिवसाधिकाः । अंकः श्येनो मीनराशि–र्धनुः पंचाशदुच्छ्रयः ॥ १८ ॥ ज्ञानादीनामनंतत्वा–दनंत इति कीर्त्यते । अनंतमणिदाम्नां वा मात्रा स्वप्ने निरीक्षणात् ॥ १९ ॥ विमलस्वामिनिर्वाणा–न्नवभिः सागरोपमैः । त्रिंशल्लक्षशरन्न्यूनै–रनंतोऽजायत प्रभुः ॥ २० ॥ शिष्यंते स्म तदा तुर्या–रके सप्त पयोधयः । लक्षैः सहस्रैर्वर्षाणां पूर्वोक्तैरधिकाः किल ॥ २१ ॥ सप्त सार्द्धा वर्षलक्षाः कुमारत्वेऽवसद्विभुः । भूपालत्वं पंचदश–वर्षलक्षाण्यपालयत् ॥ २२ ॥ सार्द्धानि सप्त वर्षाणां लक्षाणि व्रतमादधौ । लक्षाणि त्रिंशदब्दानां सर्वमायुरभूत्प्रभोः ॥ २३ ॥ व्रते सागरदत्ताख्या शिबिका विजयाभिधः । वर्द्धमानग्रामवासी प्रभोः प्रथमदायकः ॥ २४ ॥ मासत्रयं च छाद्मस्थ्ये–ऽश्वत्थश्च ज्ञानभूरुहः । प्रभो-

---

तीर्थंकर थया. (१३–१५) श्रावण वदि ७, वैशाख वदि १३, वैशाख वदि १४, वैशाख वदि १४ अने चैत्र शुदि ५–ए पांच कल्याणकना दिवसो जाणवा. पांचे कल्याणकमां नक्षत्र रेवती जाणवुं. ( १६–१७ ) गर्भस्थिति नव मास ने ६ दिवसनी, मीनराशि ने श्येननुं लांछन जाणवुं. पचास धनुष्यनुं शरीर जाणवुं. ( १८ ) ज्ञानादिक अनंत होवाथी तेम ज मणिनी अनंत माळाओ माताए स्वप्नमां देखेल होवाथी अनंत नाम स्थापन कर्युं. ( १९ ) विमळस्वामीना निर्वाणथी त्रीश लाख वर्षे न्यून नव सागरोपमे अनंतनाथजी थया. ( २० ) ते वखते चोथो आरो सात सागरोपम अने त्रीश लाख वर्ष पूर्वे कहेला वर्षो ( ६५८४००० ) ए अधिक बाकी रह्यो हतो. ( २१ ) प्रभु साडासात लाख वर्ष कौमारावस्थामां रह्या, १५ लाख वर्ष भूपाळपणानी प्रतिपालना करी ( २२ ) अने ७॥ लाख वर्ष चारित्रावस्थामां रह्या–ए रीते कुल ३० लाख वर्षनुं आयुष्य पूर्ण थयुं. (२३) दीक्षा अवसरे सागरदत्ता नामे शिबिका हती. प्रथम पारणुं वर्धमानग्रामवासी विजये कराव्युं. ( २४ ) त्रण मास छद्मस्थावस्थामां रह्या; ज्ञानवृक्ष अश्वत्थ नामनुं हतुं. प्रभुना

गणभृतः श्रेष्ठाः पंचाशत्परिकीर्त्तिताः ॥ २५ ॥ इत्यावश्यकाभिप्रायः, समवायांगे तु चतुष्पंचाशद्गणधरा उक्ता इति ज्ञेयं.

षट्षष्टिश्च सहस्राणि साधूनां सत्त्वशालिनां । द्वाषष्टिः संयतीनां च सहस्राण्यभवन् विभोः ॥ २६ ॥ लक्षद्वयं च श्राद्धानां षट्सहस्राधिकं प्रभोः । श्राविकाणां चतुर्लक्षी सहस्राश्च चतुर्दश ॥ २७ ॥ तथा पंचसहस्राणि केवलज्ञानशालिनां । तावंत्येव सहस्राणि मनोज्ञानवतामपि ॥ २८ ॥ चत्वारोऽवधिभाजां च सहस्रास्त्रिशताधिकाः । सहस्रमेकं पूर्णं च सचतुर्दशपूर्विणां ॥ २९ ॥ लसद्वैक्रियलब्धीनां सहस्राण्यष्ट जज्ञिरे । द्वाभ्यां शताभ्यामधिका त्रिसहस्री च वादिनां ॥ ३० ॥ यशोनामाद्यगणभृ–त्पद्माख्या च प्रवर्त्तिनी । पुरुषोत्तमो विष्णुश्च सदा चरणसेवकः ॥ ३१ ॥ दधत्पद्मखड्गपाशा–नपसव्ये करत्रये । नकुलं फलकं चाक्ष–सूत्रं वामकरत्रये ॥ ३२ ॥ पातालयक्षस्त्रिमुखो रक्तो मकरवाहनः । षड्भुजः कुरुते प्रीति–मनंतप्रभुसेविनां ॥ ३३ ॥ युग्मं ॥ आद्धाना खड्गपाशौ वामेतरकरद्वये । वामे करद्वये शश्व–द्दधाना फलकांकुशौ ॥ ३४ ॥

---

गणधरश्रेष्ठो पचास कह्या छे (२५) ए आवश्यकनो अभिप्राय छे. श्रीसमवायांगमां तो ५४ कह्या छे.

अनंतप्रभुने सत्त्वशाळी एवा ६६००० साधुओ, ६२००० साध्वीओ, (२६) २०६००० श्रावको, ४१४००० श्राविकाओ, (२७) ५००० केवळज्ञानी, ५००० मनःपर्यवज्ञानी, (२८) ४३०० अवधिज्ञानी, १००० चौदपूर्वी, (२९) ८००० वैक्रियलब्धिवाळा अने ३२०० वादीओनो परिवार थयो. (३०) प्रथम गणधर यश नामना, प्रथम प्रवर्तिनी पद्मा नामनी अने पुरुषोत्तम नामना वासुदेव प्रभुना भक्त थया. (३१) पाताळ नामनो यक्ष त्रण मुखवाळो, रक्त वर्णवाळो, मकरना वाहनवाळो, छ भुजावाळो, जेनी दक्षिण बाजुनी त्रण भुजामां पद्म, खड्ग अने पाशने धारण करनारो अने डाबी बाजुनी त्रण भुजामां नकुल, फलक ने अक्षसूत्रने धारण करनारो अनंतप्रभुनी सेवा करनारने प्रीति उपजावनार थयो. (३२–३३) जमणी बाजुना बे हाथमां खड्ग अने पाश तथा डाबी बाजुना बे हाथमां फलक ने अंकुशने निरंतर धारण करनारी पद्मना

पद्मासना गौरवर्णा देव्यंकुशा चतुर्भुजा । अनंतप्रभुभक्तानां दत्तेऽनंतां सुखश्रियं ॥ ३५ ॥ इत्यनंतजित् ॥

. भारते भद्दिलपुरे धातकीखंडमंडने । नृपो दृढरथोऽसौ च गुरोर्विमलवाहनात् ॥ ३६ ॥ आदाय संयमं जज्ञे विजयेऽनुत्तरे सुरः । द्वात्रिंशदर्णवायुष्क-स्ततः शून्याख्यनिर्वृति ॥ ३७ ॥ पुरे रत्नपुरे भानो-र्नृपस्य तनयोऽभवत् । सुव्रतायाः कुक्षिरत्नं धर्मनाथो जिनेश्वरः ॥ ३८ ॥ वैशाखे सप्तमी शुक्ला तृतीया माघजोज्ज्वला । माघे त्रयोदशी शुक्ला तथा पौषस्य पूर्णिमा ॥ ३९ ॥ ज्येष्ठस्य पंचमी शुक्ला कल्याणकदिनाः प्रभोः । पुष्यं च पंचस्वप्येषु भं राशिः कर्क एव च ॥४०॥ अनंतस्वामिनिर्वाणा-च्चतुर्भिः सागरोपमैः । जातो दशाब्दलक्षोनैः श्रीधर्मो जगदीश्वरः ॥४१॥ शिष्यंते स्म तदा तुर्या-रकस्यांभोधयस्त्रयः । पंचषष्टिश्चाब्दलक्षा वेदनागसहस्रकाः ॥ ४२ ॥ स्वयं धर्मस्वभावत्वा-द्गर्भस्थे वाभवद्विभौ । मातातिधार्मिकी तस्मा-द्धर्मनाथ इति स्मृतः ॥ ४३ ॥ देहोच्छ्रयः पंचचत्वा-रिंशच्चापमितः स्मृतः । वज्रं च लांछनं वर्ष-लक्षाणि दश जीवितं

---

आसनवाळी, गौर वर्णवाळी, तेम ज चार भुजावाळी अंकुशा नामना देवी अनंतप्रभुना भक्तोने पारावार सुखलक्ष्मीने आपनारी थइ. ( ३४-३५ ) इति श्रीअनंतः ॥

श्री धर्मनाथजीवर्णन—धातकीखंडना मंडनभूत भरतक्षेत्रमां भद्दिलपुर नामना नगरमां दृढरथ नामनो राजा हतो. तेणे विमळवाहन नामना गुरुपासे चारित्र अंगीकार कर्यु. मरण पामीने विजय नामना अनुत्तर विमानमां ३२ सागरोपमने आउखे देव थया. त्यांथी च्यवीने शून्य नामना देशमां रत्नपुर नामना नगरमां भानु नामना राजानी सुव्रता नामनी राणीनी कुक्षिथी धर्मनाथ नामे जिनेश्वरनो जन्म थयो.(३६-३८) वैशाख शुदि ७, माघ शुदि ३, माघ शुदि १३, पोस शुदि १५ ने ज्येष्ठ शुदि ५-ए पांच तेमना कल्याणकनी तिथिओ जाणवी. पांचे कल्याणकोमां नक्षत्र पुष्य जाणवुं, राशि कर्क जाणवी. ( ३९-४० ) अनंतनाथना निर्वाणथी दश लाख वर्ष ऊण चार सागरोपमे, धर्मनाथ प्रभु थया. ( ४१ ) ते वखते चोथो आरो त्रण सागरोपम, दश लाख वर्ष तथा ६५ लाख ने ८४००० वर्ष बाकी रह्यो हतो. (४२) पोते धर्मना स्वभाववाळा होवाथी अने प्रभु गर्भस्थ हता त्यारे माता अति धार्मिकी थयेल होवाथी धर्मनाथ एवुं नाम स्थापन कर्यु. (४३) प्रभुनुं शरीर ४५ धनुष्यनुं, लांछन वज्रनुं अने दश लाख वर्षनुं आयुष्य हतुं. (४४) तेमां अढीलाख

॥ ४४ ॥ वर्षलक्षद्वयं सार्द्धं कुमारत्वे व्रतेऽपि च। राज्ये पुनः प्रभुः पंच–वर्षलक्षाण्यपूरयत् ॥ ४५ ॥ शिविका नागदत्ताख्या छाद्मस्थ्यं मासयोर्द्वयं। धर्मसिंहः सौमनस–ग्रामेऽदादाद्यपारणां ॥ ४६ ॥ ज्ञानवृक्षश्च निर्दिष्टो दधिपर्ण इति प्रभोः। द्वि(त्रि)चत्वारिंशदादिष्टाः श्रीजिनस्य गणाधिपाः ॥ ४७ ॥ चतुःषष्टिः सहस्राणि संयतानां जिनेशितुः। तथा सहस्रा द्वाषष्टिः साध्वीनां सचतुःशताः ॥ ४८॥ चतुस्सहस्राभ्यधिके द्वे लक्षे श्राद्धपुंगवाः। चतुर्लक्षी श्राविकाणां सहस्राश्च त्रयोदश ॥ ४९ ॥ शतानि पंचचत्वारिं–शत्केवलजुषां विभोः। तावंत्येव शतान्येव मनःपर्यायिणामपि ॥ ५० ॥ त्रयोऽवधिज्ञानभाजां सहस्राः षट्शताधिकाः। वयं वैक्रियलब्धीनां सहस्राः सप्त कीर्त्तिताः ॥ ५१ ॥ शतानि नव चोक्तानि सच्चतुर्दशपूर्विणां। वादिनां च सहस्रे द्वे शतैरष्टभिरन्विते ॥५२॥ अरिष्टो मुख्यगणभृत् शिवार्या च प्रवर्तिनी। विष्णुः पुरुषसिंहश्च नृपश्चरणसेवकः॥५३॥

बीजपूराभयगदा–स्त्रिषु दक्षिणपाणिषु। गदापद्माक्षनकुलान् दधद्वामेषु च त्रिषु ॥ ५४ ॥ त्रिमुखः किन्नरो यक्षो रक्तांगः कूर्मवाहनः। षड्भुजोऽभीष्टमाधत्ते श्रीधर्मप्रभुसेविनां ॥ ५५ ॥ देवी च पन्नगाभिख्या

---

वर्ष कुमारावस्थामां, पांच लाख वर्ष राज्यावस्थामां अने अढी लाख वर्ष व्रतावस्थामां व्यतीत कर्या. ( ४५ ) दीक्षा अवसरे शिबिका नागदत्ता नामनी अने छद्मस्थ पर्याय बे मासनो हतो. प्रथम पारणुं सौमनस ग्रामे धर्मसिंहे कराव्युं. ( ४६ ) ज्ञानवृक्ष दधिपर्ण नामनुं हतुं. धर्मनाथ प्रभुने ४२ ( ४३ ) गणधरो, ( ४७ ) ६४००० साधुओ, ६२४०० साध्वीओ, ( ४८ ) २०४००० श्रावको, ४१३००० श्राविकाओ, ( ४९ ) ४५०० केवलज्ञानी, तेटला ज एटले ४५०० मनःपर्यवज्ञानी, (५०) ३६०० अवधिज्ञानी, ७००० वैक्रियलब्धिवाळा, ( ५१ ) ९०० चौदपूर्वी अने २८०० वादीनो परिवार थयो. ( ५२ ) अरिष्ट नामना मुख्य गणधर, शिवार्या नामे प्रवर्त्तिनी अने पुरुषसिंह नामनो वासुदेव प्रभुनो चरणसेवक ( भक्त ) थयो. ( ५३. )

त्रण जमणा हाथमां बीजपुर, अभय ने गदा तथा डाबा त्रण हाथमां गदा, पद्माक्ष ने नकुलने धारण करनार, रक्त वर्णवाळो, कूर्मना वाहनवाळो छ भुजावाळो अने त्रण मुखवाळो किन्नर नामनो यक्ष श्री धर्मनाथ प्रभुना सेवकोना अभीष्टने पूरनार थयो. ( ५४–५५ ) तथा पन्नगा नामे मतांतरे कंदर्पा नामे देवी चार भुजावाळी, गौर वर्णवाळी, मत्स्य-

सा कंदर्पा मतांतरे । चतुर्भुजा गौरवर्णा राजते मत्स्यवाहना ॥ ५६ ॥ उत्पलांकुशसंयुक्त–सद्दक्षिणकरद्वया । पद्माभयांचिता वामपाण्योर्दत्ते सुखं सतां ॥ ५७ ॥ इति श्रीधर्मनाथः ॥

श्रीषेणभूपतिः पूर्वं तद्राज्ञी चाभिनंदिता । उभौ युगलिनौ जातौ ततो जातौ सुधाभुजौ ॥५८॥ ततश्चामिततेजःश्री–विजयाख्यौ महर्धिकौ । ततश्च प्राणतस्वर्गे सुपर्वाणौ बभूवतुः ॥ ५९ ॥ बलदेववासुदेवौ ततो जातौ महाभुजौ । बलोऽभूदच्युताधीशो हरिस्त्वाद्यां भुवं ययौ ॥ ६० ॥ उध्धृतस्तु ततोऽवाप्य खेचराधीशतां हरिः । परिव्रज्याच्युतस्वामि–सामानिकसुरोऽभवत् ॥ ६१ ॥ ततश्च्युत्वादिमो वज्रा–युधाह्वश्चक्रवर्त्यभूत् । तदंगजोऽपरस्त्वासीत् सहस्रायुधसंज्ञकः ॥६२॥ ग्रैवेयके तृतीये तौ जग्मतुर्जनकांगजौ । मतांतरे च नवमे गतौ ग्रैवेयकेऽथ तौ ॥ ६३ ॥ विजये पुष्कलावत्यां जंबूद्वीपे ततश्च्युतौ । नगर्यां पुंडरीकिण्या–मभूतां सोदरावुभौ ॥ ६४ ॥ मेघरथदृढरथौ श्रीमेघरथमेकदा । प्रशशंस सुदेशान–सुरेंद्रः सुरपर्षदि ॥ ६५ ॥ अहो मेघरथस्यांतः स्फुरन् जीवदयारसः ।

---

ना वाहनवाळी, बे जमणी भुजामां उत्पल ने अंकुशवाळी अने डाबी बे भुजामां पद्म ने अभयवाळी सज्जनोने सुख आपनारी थइ. ( ५६–५७ ) इति श्रीधर्मनाथः ॥

श्री शांतिनाथवर्णन—पूर्वभवे श्रीषेण नामना राजा ने अभिनंदिता नामे राणी हता. ते बंने मरण पामीने युगलिक थया. त्यांथी देव थया. ( ५८ ) त्यांथी च्यवीने अमिततेज ने श्रीविजय नामना महर्द्धिक थया. त्यांथी प्राणत देवलोकमां देव थया. ( ५९ ) त्यांथी च्यवीने महापराक्रमी बळदेव ने वासुदेव थया. त्यांथी मरण पामीने बळदेव अच्युतेंद्र थया ने वासुदेव पहेली नरके गया. ( ६० ) वासुदेवनो जीव नरकमांथी नीकळीने खेचराधीशपणुं पामी, दीक्षा अंगीकार करी अच्युतेंद्रनो सामानिक देव थयो. ( ६१ ) त्यांथी च्यवीने अच्युतेंद्रनो जीव वज्रायुध नामे चक्री थया ने सामानिक देव तेनो सहस्रायुध नामे पुत्र थयो. (६२) ते पिता–पुत्र मरण पामीने त्रीजे ग्रैवेयके देव थया. मतांतरे नवमा ग्रैवेयके देव थया. ( ६३ ) त्यांथी च्यवीने जंबूद्वीपना पूर्व महाविदेहमां पुष्कलावती विजयमां पुंडरीकिणी नगरीमां बंने भाइओ मेघरथ अने दृढरथ नामना थया. एकदा ईशानेंद्रे देवोनी पर्षदामां मेघरथ राजानी प्रशंसा करी ( ६४–६५ ) के–'अहो !

न शक्यते शोपयितुं कृतयत्नैः सुरैरपि ॥ ६६ ॥ अश्रद्दधानस्तत्कश्चि-देवः शूलभृतो वचः । परीक्षितुं नृपं दक्षं-मन्यो भूलोकमाययौ ॥६७॥ पूर्ववैराद्युध्यमानौ श्येनपारापतावथ । अधिष्ठाय स दंभेना-जगाम नृप-सन्निधौ ॥ ६८ ॥ ऊचे पारापतस्तत्र रक्ष रक्ष कृपानिधे ! । श्येनो हिन-स्ति मां पीनो दीनं निःशरणं हहा ॥ ६९ ॥ ऊचे वीक्ष्य भयार्त्तं तं समुत्पन्नकृपो नृपः । यमादपि प्रकुपिता-न्मा भैषीर्नाथ ते भयं ॥ ७० ॥ कंपमाने खगे तस्मि-न्नृपोत्संगमुपाश्रिते । श्येनोऽपि सहसागत्य क्षुधा-क्षामोऽब्रवीदिति ॥ ७१ ॥ रक्ष रक्ष क्षुधा मार्य-माणं मां दक्षपुंगव ! । देहि देहि चिरात्प्राप्तं भक्ष्यं पारापतं मम ॥ ७२ ॥ एकस्योपेक्षसे प्राणा-स्तानन्यस्य च रक्षसि । तुल्येऽपि कोऽयं जीवत्वे पंक्तिभेदः किलावयोः ॥ ७३ ॥ श्येनमूचे नृपः पक्षिन् ! दीनोऽयं मुच्यतां खगः । गृहाण नानापक्वान्नं दयाधर्मोऽस्तु ते महान् ॥ ७४ ॥ श्येनः प्रोचे च

---

मेघरथ राजाना अंतःकरणमां एटलो जीवदयानो रस छे के जेनुं शोषण करवाने प्रयत्न करता देवो पण समर्थ थइ शके नहीं.' ( ६६ ) ते शूळभृत ( ईशानेंद्र )नुं वचन नहीं सद्दहीने कोइ मिथ्यामतिदेव पोताने डाह्यो मानतो सतो मेघरथ राजानी परीक्षा करवा पृथ्वीपर आव्यो. (६७) ते वखते पूर्वना वैरथी परस्पर युद्ध करता श्येन ने पारापत ( पारेवा ) मां ते दंभवडे अधिष्ठित थइने मेघरथ राजापासे आव्यो. ( ६८ ) पारापत राजाने कहे छे के-'हे कृपानिधि! मारी रक्षा करो, रक्षा करो. आ महापीन (मजबूत) एवो श्येनपक्षी निःशरण ने दीन एवा मने मारी नाखे छे.' ( ६९ ) तेने भयार्त्त जोइने उत्पन्न थइ छे कृपा जेने एवा राजाए कह्युं के-'कोपेला एवा यमथी पण हवे बीश नहीं, हवे तने भय नथी.' ( ७० ) एटले ते पक्षी कंपायमान थतो सतो राजाना खोळामां भराइ गयो. श्येन पण एकदम आवीने क्षुधाथी दुर्बळ थयो सतो आ प्रमाणे बोल्यो ( ७१ ) के-'हे दक्षपुंगव ! मने मारी नाखती एवी क्षुधाथी मारुं रक्षण कर, रक्षण कर. घणे काळे पामेला आ मारा भक्ष्य पारापतने मने आप, आप. ( ७२ ) तमे एकना प्राणनी उपेक्षा करो छो अने एकना प्राणनी रक्षा करो छो. तुल्य एवा जीवत्वमां आवो पंक्तिभेद अमारा उपर आप केम करो छो ? ' ( ७३ ) राजाए श्येनने कह्युं के-' हे पक्षी ! आ पक्षी दीन छे, तेने मूकी दे, तेना बदलामां नाना प्रकारना पक्वान्नने ग्रहण कर. तने मोटो दयाधर्म थशे.' ( ७४ ) श्येन कहे छे के—' धर्माधर्मनी विचारणा तमारा जेवा तृप्तने थाय,

भूपाल! धर्माधर्मविचारणा। भवादृशां स्यात्तृप्तानां क्षुधार्त्तानां तु सा कुतः ॥७५॥ विना सद्यस्कमांसं च नाहारोऽस्मादृशां परः। तद् द्रुतं दीयतामेष हत्या वा गृह्यतां मम ॥ ७६ ॥ नृपोऽथाचिंतयत्पारा-पतोऽयं सर्वथा मया। रक्षणीयोऽयमप्यंगी तर्पणीयो बुभुक्षितः ॥ ७७ ॥ श्येनं तत्तर्पयाम्येनं निजैर्मांसैर्यथोभयोः। दया स्यान्ननु देहेऽस्मिन् कः स्नेहः क्षणभंगुरे ॥ ७८ ॥ ततस्तुलायामारोप्य मायापारापतं नृपः। उत्कृत्य स्वोरुमांसानि तोलयामास सात्त्विकः ॥ ७९ ॥ यथा यथा स्वमांसानि तुलायां भूधवो न्यधात्। तथा तथा प्रववृधे कपोतो वीवधेन सः ॥ ८० ॥ दीनानने पुरजने क्रंदत्यंतःपुरेऽखिले। तुलामारुह्य सोत्साहं रसेनः श्येनमित्यवक् ॥ ८१ ॥ गृहाण श्येन! देहं मे कृतार्थं जीवरक्षणात्। तृप्तिस्तवाभयं चास्य भूयान्मम च निर्जरा ॥ ८२ ॥ तं देहेऽपि गतस्नेहं निस्संदेहं जिनागमे। नृपं वीक्ष्य दयावीरं तुष्टस्तुष्टाव निर्जरः ॥ ८३ ॥ साधु साधु महाधीर! वीरकोटीर! सांप्रतं। ईशानेशोऽनिशं

---

अमारा जेवा क्षुधार्त्तने क्यांथी, थाय ? ( ७५ ) वळी अमारा जेवाने तरतना मांस शिवाय बीजो आहार होतो नथी, माटे तरत ज मने ए पक्षी आपी द्यो, नहीं तो पछी मारी हत्या ल्यो.' ( ७६ ) राजा विचारे छे के-'आ पारापत तो मारे सर्वथा रक्षणीय छे अने आ भूख्या पक्षीने पण तृप्त करवो जोइए, ( ७७ ) तेथी मारा मांसवडे आ श्येनने तृप्त करुं के जेथी बंनेनो यथार्थ ने दया थाय. आ क्षणभंगुर देह उपर शुं स्नेह करवो ? ' ( ७८ ) पछी त्राजवुं मंगावी तेना एक बाजुना पल्लामां मायावी पारापतने मूकी ते सात्त्विक पोताना साथळनुं मांस कापीने बीजा पल्लामां मूकी तोळवा लाग्या. ( ७९ ) अहीं जेम जेम राजा पोतानुं मांस तुलामां मूके छे तेम तेम कपोत तोलमां वधतो जाय छे. ( ८० ) ते वखते आ स्थिति जोइने नगरजनो दीन मुखवाळा थइ गया. आखुं अंतःपुर आक्रंद करवा लाग्युं. त्राजवामां पारेवा जेटलो मांसनो तोल न थवाथी उत्साहसहित त्राजवामां चढीने राजाए श्येनने कह्युं ( ८१ ) के—' हे श्येन ! जीवरक्षाथी कृतार्थ थयेला आ मारा देहने ज तुं ग्रहण कर जेथी तने तृप्ति थाय, आने अभय मळे ने मने निर्जरा थाय.' ( ८२ ) ए रीते देहने विषे निःस्नेह अने जिनागममां निःसंदेह दयावीर एवा राजाने जोइने ते देव अत्यंत संतुष्ट थइ स्तुति करवा लाग्यो (८३) के-'साधु, साधु, हे'

स्तौति सत्त्वं ते देवपर्षदि ॥ ८४॥ शंसितोऽसि दयावीर ! यादृशः शूलपाणिना । ततः शतगुणोत्साहो वीक्षितोऽसि परीक्षणे ॥ ८५ ॥ खेदितोऽसि वृथा राज–न्नपराधं क्षमस्व मे । इति ब्रुवाणः पुष्पाणां वृष्टिं हृष्टस्ततान सः ॥ ८६ ॥ प्रादुष्कृत्य स्वरूपं स्वं सज्जीकृत्य च भूपतिं । चमत्कारचलन्मौलिः सुरः स्वर्गं जगाम सः ॥ ८७ ॥ करुणावज्रायुधनाटके उत्तराध्ययनलघुवृत्तौ च वज्रायुधचक्रवर्त्तिभवेऽयं देवपरीक्षणादिर्व्यतिकर उक्तोऽस्तीति ध्येयं, तथा करुणावज्रायुधे परीक्षकौ द्वौ देवावुक्तौ इति ज्ञेयं.

गुरोर्घनरथात्प्राप्य दीक्षां मेघरथो नृपः । मृत्वा सर्वार्थसिद्धेऽभूत्परमस्थितिकः सुरः ॥८८॥ जीवो दृढरथस्यापि भविष्यन् गणभृद्विभोः । मृत्वा तत्रैव देवोऽभू–च्च्युत्वा मेघरथोऽथ च ॥८९॥ कुरुदेशशिरोरत्ने पुरे श्रीहस्तिनापुरे । विश्वसेनस्य भूभर्त्तुः पुत्रोऽभूदचिरांगजः ॥९०॥ प्रभौ गर्भे समुत्पन्ने शशामोपद्रवोऽखिले । देशे जनानां मार्यादि–स्ततः शांतिरिति स्मृतः

---

महावीर ! हे वीरकोटीर ! आजे ईशानेंद्रे वारंवार देवसभामां तमारी प्रशंसा करी छे. ( ८३–८४ ) हे दयावीर ! शूलपाणिए जेवी तमारी प्रशंसा करी ते करतां सोगणो उत्साह तमारी परीक्षा करवा में तमारामां जोयो छे. ( ८५ ) हे राजन् ! में वृथा तमने खेद पमाड्यो छे, ते मारो अपराध क्षमा करो.' आ प्रमाणे हर्षित थइने पुष्पोनी वृष्टि करी, ( ८६ ) पछी पोतानुं स्वरूप प्रगट करी, राजाने बराबर सज्ज करी, चमत्कारवडे चलित मुकुटवाळो ते देव स्वर्गे गयो. ( ८७ ) करुणावज्रायुध नाटकमां अने उत्तराध्ययन लघुवृत्तिमां तो वज्रायुध चक्रीना भवमां आ देवपरीक्षणादि वृत्तांत कह्यो छे, तथा करुणावज्रायुध नाटकमां बे देवो परीक्षा करवा आव्यानुं कह्युं छे–इति ज्ञेयं.

घनरथ नामना तीर्थंकर गुरुनी पासे दीक्षा अंगीकार करीने मेघरथ राजा सर्वार्थसिद्ध विमानमां उत्कृष्ट आउखे देव थया. ( ८८ ) दृढरथ पण मरण पामीने त्यां ज देव थयो. ते शांतिनाथ प्रभुना गणधर थशे. हवे मेघरथ राजानो जीव स्वर्गथी च्यवीने कुरुदेशना शिरोरत्न जेवा हस्तिनापुर नगरमां विश्वसेन राजानी अचिरा राणीना पुत्र थया. ( ८९–९० ) प्रभु गर्भमां आव्या एटले आखा देशमां मारी विगेरेनो उपद्रव हतो ते सर्व शांत थइ गयो तेथी अथवा शांति एटले क्रोधनो विजय ( पराभव ) अथवा

॥ ९१ ॥ अथवा—शांतिः स्यात्क्रोधविजयः शांतिर्वोपद्रवक्षयः । शांतिः शांतरसो वा त—त्प्रधानत्वात्तथाभिधः ॥ ९२ ॥ भाद्रस्य सप्तमी श्यामा ज्येष्ठे कृष्णत्रयोदशी । ज्येष्ठे चतुर्दशी कृष्णा पौषे च नवमी सिता ॥ ९३ ॥ ज्येष्ठे त्रयोदशी कृष्णा कल्याणकदिनाः प्रभोः । धिष्ण्यं च पंचस्वप्येषु कीर्त्तितं यमदैवतं ॥ ९४ ॥ नव मासाः स्थितिर्गर्भे स्वामिनः षड्दिनाधिकाः । चत्वारिंशत्कार्मुकानि प्रज्ञप्तो वपुरुच्छ्रयः ॥ ९५ ॥ पादत्रयेण पल्यस्य वर्षलक्षेण चोनितैः । त्रिभिः पयोधिभिः शांति—र्धर्मनिर्वाणतोऽभवत् ॥ ९६ ॥ पल्यपादत्रयी शेषा तदा तुर्यारकेऽभवत् । पूर्वोक्तैः शरदां लक्षैः सहस्रैश्च समन्विता ॥ ९७ ॥ राशिर्मेषो मृगो लक्ष्म वर्षलक्षं च जीवितं । तुल्यैश्चतुर्भिर्भागैस्त—त्पूरयामास विश्वजित् ॥ ९८ ॥ पंचविंशतिमब्दानां सहस्राणि कुमारतां । तावत्कालं च बुभुजे मंडलाधीशतामपि ॥ ९९ ॥ पंचविंशतिमेवाब्द—सहस्रान् सार्वभौमतां । कालं तावंतमेवायं व्रतपर्यायमाश्रयत् ॥ ७०० ॥ सर्वार्था शिबिका वर्ष—मेकं छद्मस्थता मता । सुमित्रो मंदिरपुरे पारणां प्रथमां ददौ ॥ ७०१ ॥ अत्र वर्षमेकं छद्मस्थता मता इत्यावश्यका॰

---

शांति एटले उपद्रवोनो नाश अथवा शांति एटले शांत रस, आ सर्व ते प्रभुमां मुख्य-पणे होवाथी तेमनुं नाम शांतिनाथ थयुं. ( ९१–९२ ) भादरवा वदि ७, ज्येष्ठ वदि १३, ज्येष्ठ वदि १४, पोष शुदि ९ अने ज्येष्ठ वदि १३ आ तेमना कल्याणकना दिवसो थया. तेमना पांचे कल्याणकोमां नक्षत्र भरणी जाणवुं. ( ९३–९४ ) गर्भस्थिति ९ मास ने ६ दिवसनी ने ४० धनुष्यनुं शरीर जाणवुं. ( ९५ ) धर्मनाथना निर्वाण पछी पोणा पल्यो-पमे ने एक लाख वर्षे ऊणा त्रण सागरोपमे शांतिनाथनो जन्म थयो. ( ९६ ) ते वखते चोथो आरो पोणो पल्योपम, एक लाख वर्ष ने पूर्वे कहेला वर्षोए अधिक शेष रहेल जाणवो. ( ९७ ) प्रभुनी राशि मेष ने लंछन मृगनुं जाणवुं. लाख वर्षनुं आयुष्य तेना चार सरखा भाग पाडवा अने तेवा चार भागे आयुष्य पूर्ण थयेलुं जाणवुं. ( ९८ ) एक भागना २५००० वर्ष कौमारावस्थामां, एक भाग मंडळाधीशपणामां, ( ९९ ) एक भाग चक्रवर्तीपणामां ने एक भाग व्रतपर्याय तरीके जाणवो. ( ७०० ) दीक्षा अवसरे शिबिका सर्वार्था नामनी जाणवी. एक वर्ष छद्मस्थकाळ जाणवो. प्रथम पारणुं मंदिरपुरमां सुमित्र राजाने त्यां थयुं. ( ७०१ ) अहीं जे एक वर्ष छद्मस्थता कही छे ते

पेक्षया, सप्ततिशतस्थानकापेक्षया च पाठः—ननु ज्येष्ठासितचतुर्दश्याः पौषसितनवमीं यावद्गणने साधिकाः सप्त मासाः स्युः, यदि चाधिकमासः संभवेत्तदापि साधिका अष्ट मासा एव स्युः, तत्कथं वर्षं संभवति छाद्मस्थ्यकालमानमिति चेत्सत्यं, परमर्द्धाधिक्ये रूपं ( पूर्णं ) देयमिति गणितज्ञवचनानुवृत्येदमप्युक्तं भावीति संभाव्यते, ग्रंथांतरे तु तदनपेक्षणादधिकमासापेक्षणाच्च साधिकमासाष्टकसंभवे नव मासा अप्युक्ता दृश्यंते इति ध्येयं.

नंदीनामा ज्ञानवृक्षः प्रज्ञप्तोऽस्य जिनेशितुः । षट्त्रिंशदेव गण-भृ-द्वरा भगवतः स्मृताः ॥ २ ॥ इदं गणधरमानमावश्यकानुसारेण, समवायांगे तु श्रीशांतेर्नवतिर्गणधरा इति दृश्यते. द्वाषष्टिश्च सहस्राणि साधवः शुद्धसंयमाः । संयतीनां चैकषष्टिः सहस्राः षट्शताधिकाः ॥ ३ ॥ श्रावकाणां सनवति-सहस्रं लक्षयोर्द्वयं । श्राविकाणां त्रिलक्ष्याढ्या त्रिनवत्या सहस्रकैः ॥ ४ ॥ सर्वज्ञानां सहस्राश्च चत्वारस्त्रिशताधिकाः । शतानि चत्वारिंशच्च मनःपर्यायशालिनां ॥ ५ ॥ सहस्राणि त्रीण्यभूव-न्नवधिज्ञानधारिणां । अष्टौ शतानि प्रोक्तानि सच-

---

आवश्यकने अभिप्राये जाणवी. सप्ततिशतस्थानकनी अपेक्षाए तो ननु इति प्रश्ने 'ज्येष्ठ वदि १४ शे दीक्षा ने पोष शुदि ९ मे केवळज्ञान ए रीते गणतां तो साधिक सात मास थाय. कदि ( पोष मास ) अधिक मासनो संभव होय तो पण साधिक आठ मास थाय, *पण छद्मस्थकाळ एक वर्षनो शी रीते संभवे ?' तेने उत्तर आपे छे के तारुं कहेवुं सत्य छे,* परंतु अर्धथी अधिक पूर्ण समजवुं एवुं गणितज्ञनुं वचन छे, ते अनुसारे आ कथन करेलुं हशे एम संभवे छे.' ग्रंथांतरमां तो तेवी अपेक्षा नहीं करीने अने अधिक मासनी अपेक्षा करीने साधिक आठ मासनो संभव होवाथी नव मास कहेला पण देखाय छे. इति ध्येयं.

प्रभुनुं ज्ञानवृक्ष नंदी नामनुं कहेलुं छे. शांतिनाथने गणधरो ३६ कहेला छे. (७०२) 'आ संख्या आवश्यक अनुसारे जाणवी. समवायांगमां तो श्री शांतिनाथने ९० गणधरो कहेला देखाय छे. ' बीजो परिवार नीचेप्रमाणे—६२००० शुद्ध संयमधारी साधुओ, ६१६०० साध्वीओ, ( ३ ) २९०००० श्रावको, ३९३००० श्राविकाओ, ( ४ ) ४३०० केवळज्ञानी, ४००० मनःपर्यवज्ञानी, ( ५ ) ३००० अवधिज्ञानी, ८०० चौदपूर्वी,

तुर्दशपूर्विणां ॥ ६ ॥ बिभ्रतां वैक्रियां लब्धिं सहस्राः षण्महात्मनां । वादिनां च सहस्रे द्वे निर्दिष्टे सचतुःशते ॥ ७ ॥ जीवो दृढरथस्याथ च्युत्वा सर्वार्थसिद्धितः । प्रथमः प्रथमानश्रीः श्रीशांतेर्योगजोऽभवत् ॥ ८ ॥ गणाधिपाग्रणीः सोऽभू–च्चक्रायुध इति प्रभोः । प्रवर्तिनी च सुमति–र्भक्तः कोणाचलो नृपः ॥ ९ ॥ वराहवाहनः क्रोड–वदनः श्यामलद्युतिः । बीजपूरकसत्पद्म–युग्दक्षिणकरद्वयः ॥ १० ॥ नकुलं चाक्षसूत्रं च दधद्वामकरद्वये । यक्षो विजयते दक्षो गरुडाख्यश्चतुर्भुजः ॥ ११ ॥ पुस्तकोत्पलसंयुक्त–सद्दक्षिणकरद्वया । कमंडलुं च कमलं दधत्यन्यकरद्वये ॥ १२ ॥ पद्मासना चतुःपाणि–र्निर्वाणी कनकच्छविः । श्रीशांतिनाथभक्तानां कुरुते मंगलावलीं ॥ १३ ॥ इति श्रीशांतिः ॥

आवर्त्तनाम्नि विजये जंबूद्वीपस्य मंडने । प्राग्विदेहे खड्गिपुर्यां नृपः सिंहाह्वयोऽभवत् ॥ १४ ॥ स संवरगुरोः पार्श्वे प्रतिपद्य शुभव्रतं । त्रयस्त्रिंशत्सागरायुः सर्वार्थे त्रिदशोऽभवत् ॥ १५ ॥ कुरुदेशे गजपुरे

---

( ६ ) ६००० मुनिओ वैक्रियलब्धिवाळा अने २४०० वादी साधुओ जाणवा. ( ७ ) दृढरथनो जीव सर्वार्थसिद्धिथी च्यवीने विस्तारवंत शोभावाळा शांतिनाथना जे प्रथम पुत्र थया ते चक्रायुध नामे गणधरना अग्रणी थया. प्रवर्तिनी सुमति नामे थइ अने कोणाचळ नामनो राजा भक्त थयो. ( ८–९ ) वराहना वाहनवाळो, क्रोड ( सुवर ) समान मुखवाळो, श्याम कांतिवाळो, दक्षिणना बे हाथ बीजपूरक ने सत्पद्मवाळा अने डाबा बे हाथ नकुल ने अक्षसूत्रवाळा छे जेना एवो, दक्ष अने चारभुजावाळो गरुड नामनो यक्ष जयवंत वर्ते छे. ( १०–११ ) पुस्तक ने उत्पल संयुक्त जेना जमणा बे हाथ छे अने कमंडळ ने कमळवाळा बे डाबा हाथ छे जेना एवी पद्मना आसनवाळी, चार भुजावाळी, कनकसमान कांतिवाळी निर्वाणी नामनी देवी श्री शांतिनाथना भक्तोने मंगळोनी श्रेणि करे छे. ( १२–१३ ) इति श्रीशांतिः ॥

श्रीकुंथुनाथवर्णन—जंबूद्वीपना मंडनरूप पूर्व महाविदेहमां खड्गीपुरीमां सिंह नामनो राजा हतो. ( १४ ) तेणे संवर नामना गुरुपासे शुभ व्रत ( चारित्र ) अंगीकार कर्युं. काळ करीने सर्वार्थसिद्धमां ३३ सागरोपमने आउखे देव थया. ( १५ ) त्यांथी

ततः सूरमहीपतेः । सुतोऽभूत्कुंथुनामार्हन् श्रीदेवीकुक्षिमौक्तिकं ॥ १६ ॥ श्रावणे नवमी कृष्णा राधे कृष्णा चतुर्दशी । चैत्रे च पंचमी कृष्णा तृतीया च मधोः सिता ॥ १७ ॥ वैशाखकृष्णप्रतिपत् कल्याणकदिनाः प्रभोः । नक्षत्रं कृत्तिकासंज्ञं पंचस्वप्येषु कीर्त्तितं ॥ १८ ॥ नव गर्भस्थितिर्मासाः प्रभोः पंचदिनाधिकाः । पंचत्रिंशत्कार्मुकाणि ख्यातो देहोच्छ्रयः प्रभोः ॥ १९ ॥ मेषो लक्ष्म वृषो राशिः स्तूपो यद्रत्नजो भुवि । मात्रा निरीक्षितः स्वप्ने ततः कुंथुरिति श्रुतः ॥ २० ॥ श्रीशांतिनाथनिर्वाणा–त्पल्यार्द्धेनाभवत्प्रभुः । श्रीकुंथुः पंचनवति–सहस्राब्दोनताजुषा ॥ २१ ॥ पादः पल्योपमस्यैकः शेषस्तुर्यारके तदा ॥ पंचषष्ट्या वर्षलक्षैः सहस्रैश्चोदितैर्युतः ॥ २२ ॥ त्रयोविंशतिमब्दानां सहस्रान् पर्यपूरयत् । चतुर्ष्वंशेषु प्रत्येकं सार्द्धसप्तशताधिकान् ॥ २३ ॥ कौमार्ये मंडलेशत्वे चक्रित्वे संयमे च सः । सर्वायुः पंचनवतिः सहस्राः शरदां प्रभोः ॥ २४ ॥ विजया शिबिकाब्दानि छाद्मस्थ्ये षोडश प्रभोः । प्रथमां पारणां व्याघ्र–सिंहश्चक्रपुरे ददौ ॥ २५ ॥ ज्ञानवृक्षश्च तिलका–भिधानः

---

व्यवीने कुरुदेशमां गजपुर नगरमां सूरमहीपतिना पुत्र कुंथु नामना तीर्थंकर श्रीदेवी मातानी कुक्षिमां मौक्तिकरूपे उत्पन्न थया. ( १६ ) श्रावण वदि ९, वैशाख वदि १४, चैत्र वदि ५, माह शुदि ३ अने वैशाख वदि १–आ पांच कल्याणकनी तिथिओ समजवी. पांचे कल्याणकमां कृत्तिका नक्षत्र जाणवुं. ( १७–१८ ) ९ मास ने पांच दिवसनी गर्भस्थिति, ३५ धनुष्यनुं शरीर, ( १९ ) मेषनुं लंछन अने वृषराशि जाणवी. माताए रत्ननो स्तूप पृथ्वीपर रहेलो स्वप्नमां जोएल होवाथी कुंथु नाम स्थापन कर्युं. ( २० ) शांतिनाथना निर्वाणथी ९५००० वर्षे न्यून अर्ध पल्योपमे कुंथुनाथनो जन्म थयो. ( २१ ) ते वखते चोथो आरो पा पल्योपम, ९५००० वर्ष ने ६५८४००० वर्ष बाकी रह्यो हतो. ( २२ ) कुंथुनाथनुं आयुष्य ९५००० वर्षनुं हतुं ते चार विभागे पूर्ण कर्युं हतुं. एक भाग २३७५० वर्ष प्रमाण कौमारावस्थामां, एक भाग मंडलिकपणामां, एक भाग चक्रवर्तीपणामां ने छेलो एक भाग संयमावस्थामां व्यतीत कर्यो हतो. ( २३–२४ ) दीक्षावसरे शिबिका विजया नामनी हती अने छद्मस्थपणामां सोळ वर्ष व्यतीत थया हता. प्रथम पारणुं चक्रपुरमां व्याघ्रसिंह राजाने त्यां थयुं हतुं. ( २५ ) ज्ञानवृक्ष-

कीर्त्तितः प्रभोः । पंचात्रिंशद्गणभृतः श्रीकुंथुस्वामिनः स्मृताः ॥ २६ ॥ षष्टिः सहस्राः साधूनां साध्वीनां षट्शताधिकाः । श्रावकाणां लक्षमेको-नाशीतिश्च सहस्रकाः ॥ २७ ॥ लक्षास्तिस्रः श्राविकाणां सैकाशीति-सहस्रकाः । द्वात्रिंशद् द्वाविंशतिर्वा केवलज्ञानिनां शताः ॥ २८ ॥ त्रयस्त्रिंशच्छताश्चत्वा-रिंशा मानसवेदिनां । अवधिज्ञानभाजां च शतानि पंचविंशतिः ॥ २९ ॥ सचतुर्दशपूर्वाणां शताः षट् सप्तति-स्पृशः । शतान्यथैकपंचाश-त्सद्वैक्रियजुषामिह ॥ ३० ॥ वादिनां च सहस्रे द्वे शंबो गणधरोऽग्रिमः । प्रवर्त्तिनी दामिनी च कुवेरो भक्त-भूपतिः ॥ ३१ ॥ गंधर्वयक्षः श्यामांगो हंसगामी चतुर्भुजः । अपसव्ये करद्वंद्वे दधद्वरदपाशकौ ॥ ३२ ॥ मातुलिंगांकुशौ वामे दधानः पाणि-यामले । श्रीकुंथुनाथभक्तानां समर्थयति वांछितं ॥ ३३ ॥ बीजपूरक-शूलाढ्य-सद्दक्षिणकरद्वया । मुसंढिपद्मसंशोभि-वामहस्तांबुजद्वया ॥ ३४ ॥ चतुर्भुजाच्युता देवी बलाख्या च मतांतरे । मयूरवाहना स्वर्ण-द्युतिः शं कुरुते सतां ॥ ३५ ॥ इति श्रीकुंथुनाथः ॥

---

तिलक नामनुं हतुं. श्रीकुंथुनाथस्वामीने ३५ गणधर, ( २६ ) ६०००० साधुओ, ६०६०० साध्वीओ, १७९००० श्रावको, ( २७ ) ३८१००० श्राविकाओ, ३२०० अथवा २२०० केवलज्ञानी, ( २८ ) ३३४० मनःपर्यवज्ञानी, २५०० अवधिज्ञानी, (२९) ६७० चौदपूर्वी, ५१०० वैक्रियलब्धिवाळा ( ३० ) अने २००० वादीओनो परिवार थयो. मुख्य गणधर शंब नामे, मुख्य प्रवर्त्तिनी दामिनी नामे अने मुख्य भक्त कुबेर नामे राजा थयो. ( ३१ ) गंधर्व नामनो यक्ष श्यामवर्णवाळो, हंसना वाहनवाळो, चार भुजा-वाळो, जमणा बे हाथमां वरद ने पाश अने डाबा बे हाथमां मातुलिंग ने अंकुशने धारण करनारो श्रीकुंथुनाथना भक्तोना वांछितने पूरनार थयो. ( ३२–३३ ) देवी अच्युता अथवा बला नामे दक्षिण बाजुना बे हाथमां बीजपूरक ने शूलने धारण कर-नारी अने डाबी बाजुना बे हाथमां मुसंढी ने पद्मने धारण करनारी, तेनावडे शोभित करकमळवाळी, चार भुजावाळी, मयूरना वाहनवाळी अने स्वर्णसमान कांतिवाळी सज्ज-नोने सुखनी आपनारी थइ. ( ३४–३५ ) इति श्रीकुंथुनाथः ॥

जंबूद्वीपे प्राग्विदेहे वत्साख्ये विजये नृपः । सुसीमायां धनपतिः प्रव्रज्य संवराद्गुरोः ॥ ३६ ॥ त्रयस्त्रिंशत्सागरायुः सर्वार्थे निर्जरोऽभवत् । ततः कुरुषु देशेषु नगरे हस्तिनापुरे ॥ ३७ ॥ सुदर्शनस्य नृपते-र्देवी-कुक्षिसमुद्भवः । अरनामाभवन्नंद्या-वर्त्तांकोऽष्टादशो जिनः ॥ ३८ ॥ द्वितीया फाल्गुने शुक्ला मार्गे च दशमी सिता । उज्ज्वलैकादशी मार्गे द्वादशी कार्त्तिके सिता ॥ ३९ ॥ मार्गे च दशमी शुक्ला कल्याणकदिना इमे । एषु पंचसु नक्षत्रं रेवती परिकीर्त्तितं ॥ ४० ॥ अष्टघस्राधिका मासा नव गर्भस्थितिर्विभोः । राशिर्मीनस्तथा त्रिंश-च्चापानि वपुरुच्छ्रयः ॥ ४१ ॥ वंशादिवृद्धिकरणा-दरो नाम्ना जिनोऽभवत् । महारत्नारकस्व-प्ना-नुसाराद्वा तथाभिधः ॥ ४२ ॥ पल्योपमस्य पादेन न्यूनेन शरदा-मिह । एककोटिसहस्रेण वेदनाग (८४) सहस्रकैः ॥ ४३ ॥ श्रीकुंथुस्वा-मिनिर्वाणा-ज्जन्माभवदरप्रभोः । तदा तुर्यारेऽब्दकोटि-सहस्रमवशि-ष्यते ॥ ४४ ॥ पूर्वोक्तैः शरदां लक्षैः सहस्रैश्च समन्वितं । युक्तं चायु-ष्ककालेन श्रीमदष्टादशार्हतः ॥ ४५ ॥ अपूरयत्कुमारत्वे सहस्राण्येक-

---

श्री अरनाथवर्णन—जंबूद्वीपना पूर्व महाविदेहमां वत्सा नामनी विजयमां सुसीमा नामनी नगरीमां धनपति नामे राजा हतो. तेणे संवर नामना गुरु पासे चारित्र अंगीकार कर्युं. त्यांथी मरण पामीने सर्वार्थसिद्ध विमानमां ३३ सागरोपमने आउखे देवपणे उत्पन्न थया. त्यांथी च्यवीने कुरु नामना देशमां हस्तिनापुर नगरमां सुदर्शन नामना राजानी देवी नामनी राणीनी कुक्षिथी नंद्यावर्त्तना लांछनवाळा अढारमा अर नामना तीर्थंकर थया. ( ३६–३८ ) फाल्गुन शुदि २, मार्गशीर्ष शुदि १०, मार्गशीर्ष शुदि ११, कार्त्तिक शुदि १२ अने मार्गशीर्ष शुदि १०–आ पांच कल्याणकना दिवसो जाणवा. ए पांचे कल्याणकमां नक्षत्र रेवती जाणवुं. (३९–४०) गर्भस्थिति ९ मास ने ८ दिवसनी राशि मीन अने ३० धनुष्य प्रमाण शरीर जाणवुं. ( ४१ ) वंशादिनी वृद्धि करवाथी तेम ज महारत्नना अरको स्वप्नमां जोयेल होवाथी अरनाथ नाम स्थापन कर्युं. ( ४२ ) श्री कुंथुनाथना निर्वाणथी एक हजार क्रोड वर्षे अने ८४००० वर्षे न्यून पा पल्योपमे अरनाथनो जन्म थयो. ते वखते चोथो आरो एक हजार क्रोड अने पूर्वे कह्या प्रमाणेना वर्षो तथा ८४००० वर्ष बाकी रह्यो हतो. ( ४३–४५ ) श्री अरनाथ प्रभुए २१०००

विंशतिं । वर्षाणां मंडलेशत्वे चक्रित्वे संयमेऽपि च ॥ ४६ ॥ शरत्सहस्रांश्चतुर-शीतिमेवमपालयत् । आयुः सर्वं तत्र वर्ष-त्रयं छद्मस्थता विभोः ॥ ४७ ॥ शिबिका वैजयंत्याद्य-भिक्षां राजपुरे ददौ । नाम्नाऽपराजितश्चूता-ख्यस्तु ज्ञानतरुः प्रभोः ॥ ४८ ॥ त्रयस्त्रिंशद्गणभृतः पंचाशत्संयतात्मनां । सहस्राः संयतीनां च निर्दिष्टाः षष्टिरागमे ॥ ४९ ॥ एकं लक्षं सहस्राश्च-तुरशीतिरुपासकाः । लक्षत्रयं श्राविकाणां द्वासप्ततिसहस्रयुक् ॥ ५० ॥ शतान्यष्टाविंशतिश्च केवलज्ञानशालिनां । द्वे सहस्रे शताः पञ्चै-कपञ्चाशा मनोविदाम् ॥ ५१ ॥ अवधिज्ञानिनां द्वे च सहस्रे षट्शताधिके । शतानि षट् दशाढ्यानि सच्चतुर्दशपूर्विणां ॥ ५२ ॥ शतास्त्रिसप्ततिश्चोक्ता बिभ्रतां वैक्रियश्रियं । वादिनां षोडश शताः शिष्टैर्व्यक्तीकृताः श्रुते ॥ ५३ ॥ कुंभो गणभृतां मुख्यो रक्षिताख्या प्रवर्त्तिनी । सुभूमनामा नृपतिः सदा चरणसेवकः ॥ ५४ ॥ बीजपूरं शरं खड्गं मुद्गरं पाशकं तथा । अभयं च क्रमाद्बिभ्रत् षट्सु दक्षिणपाणिषु ॥ ५५ ॥ दधानो नकुलं चापं फलकं शूलमंकुशं । अक्षसूत्रं च वामेषु करेषु षट्स्वपि क्रमात् ॥ ५६ ॥ त्रिलोचनः श्यामवर्णः षडास्यः शंखवाहनः । स द्वादशभुजो यक्षे-न्द्राख्यो यक्षो ह्यरप्रभोः

---

वर्ष कौमारपणामां, २१००० वर्ष मंडलिकपणामां, २१००० वर्ष चक्रीपणामां अने २१००० वर्ष संयमीपणामां व्यतिक्रमाव्या. ( ४६ ) ए रीते कुल ८४००० वर्षनुं आयुष्य पाळ्युं. तेमां छद्मस्थावस्था त्रण वर्षनी जाणवी. ( ४७ ) शिबिका वैजयंती नामे जाणवी. प्रथम पारणुं राजपुरमां अपराजित राजाने त्यां थयुं. ज्ञानवृक्ष चूत ( आम्र ) नामनुं जाणवुं. ( ४८ ) अरनाथ प्रभुने ३३ गणधरो, ५०००० साधुओ, ६०००० साध्वीओ, ( ४९ ) १८४००० श्रावको, ३७२००० श्राविकाओ, ( ५० ) २८०० केवळज्ञानी, २५५१ मनःपर्यवज्ञानी, ( ५१ ) २६०० अवधिज्ञानी, ६१० चौदपूर्वी ( ५२ ) ७३०० वैक्रियलब्धिवाळा अने १६०० वादीओनो परिवार सिद्धांतमां व्यक्त कहेलो छे. ( ५३ ) कुंभ नामना मुख्य गणधर, रक्षिता नामनी प्रवर्तिनी अने सुभूम नामनो राजा तेमनो सदानो चरणसेवक ( भक्त ) थयो. ( ५४ ) यक्षेंद्र नामनो यक्ष बार भुजावाळो, तेमां जमणी बाजुनी छ भुजाओमां बीजपूर, शर, खड्ग, मुद्गर, पाश ने अभयने धारण करनारो तथा डाबी बाजुनी छ भुजामां नकुल, चाप, फलक, शूळ, अंकुश ने अक्षसूत्रने धारण करनारो, छ मुखवाळो, त्रण लोचनवाळो, श्याम वर्णवाळो अने शंखना वाहनवाळो अरनाथनो भक्त थयो. ( ५५-५७ ) धारिणी

॥ ५७ ॥ मातुर्लिंगोत्पलोपेत–सद्दक्षिणकरद्वया । पद्माक्षसूत्रसंयुक्ता–ऽवामवामकरद्वया ॥ ५८ ॥ देवी श्रीधारणी नील–वर्णा पद्मावरासना। चतुर्भुजा क्षिणोत्यार–मरस्वाम्यंह्रिसेविनां ॥ ५९ ॥ इति श्रीअरः ॥

विजये सलिलावत्यां जंबूद्वीपस्य मंडने । प्रत्यग्विदेहे पूर्वीत–शोका तत्राभवन्नृपः ॥ ६० ॥ नाम्ना महाबलः षड्भि–र्मित्रैर्युक्तः स संयमं । वरधर्मर्षितः प्राप्य मनस्येवमचिंतयत् ॥ ६१ ॥ इति षष्ठांगाभिप्रायः, सप्ततिशतस्थानके तु मल्लेः प्राग्भवे श्रमण इति नाम श्रूयते ॥ प्रव्रज्यावसरे स्नेहा–तिरेकादनुयायिभिः । तुल्यं कार्यं तपोऽस्माभि–रिति संधाविधायिभिः ॥ ६२ ॥ मित्रैरमीभिः सदृशं करिष्यामि तपो यदि । तुल्य एव भविष्यामि तदामीभिर्भवांतरे ॥ ६३ ॥ युग्मं ॥ ततः केनाप्युपायेन करोम्येभ्यस्तपोऽधिकं । ज्येष्ठो येन भवाम्यत्रा–मुत्राप्येभ्यस्तपोबलात् ॥ ६४ ॥ ततो वृथा व्यथाशंसी मायया वर्द्धयंस्तपः ॥ मुधा बबंध स्त्रीवेदं धिङ्मायां स्वोपघातिनीं

---

नामनी देवी जमणी बाजुना बे हाथमां मातुलिंग अने उत्पल अने डाबी बाजुना बे हाथमां पद्म ने अक्षसूत्रने धारण करनारी, नील वर्णवाळी, श्रेष्ठ पद्मना आसनवाळी, चार भुजावाळी अरनाथ प्रभुना चरणसेवीना कष्टने नाश करनारी थइ. ( ५८–५९ ) इति श्रीअरनाथः ॥

श्री मल्लिनाथवर्णन—जंबूद्वीपना मंडनरूप पश्चिममहाविदेहमां सलिलावती नामनी विजयमां वीतशोका नामनी नगरीमां महाबळ नामे राजा हतो. तेणे वैश्रमण, अचल, धरण, पूरण, वसु ने अभिचंद्र ए छ मित्रो साथे वरधर्म ऋषिपासे चारित्र अंगीकार कर्युं. ( आवो श्रीज्ञाताधर्मकथा नामना छट्ठा अंगनो अभिप्राय छे–सप्ततिशतस्थानक ग्रंथमां तो मल्लिनाथनुं पूर्वभवे श्रमण एवुं नाम कहेल छे. ) तेणे मनमां आ प्रमाणे विचार कर्यो ( ६०–६१ ) के–' अमे प्रव्रज्या लीधी त्यारे परस्परना स्नेहना अतिरेकपणाथी आपणे बधाए एक सरखो तप करवो एवी प्रतिज्ञा करी छे. हवे जो हुं आ बधानी सरखो तप करुं तो आवता भवमां तेमनी सरखो ज थाउं, ( ६२–६३ ) माटे कोइपण उपायवडे तेमनाथी अधिक तप करुं के जेथी ते तपना प्रभावे आ भवमां अने आवता भवमां पण तेमनाथी ज्येष्ठ थाउं. ( ६४ ) आ प्रमाणे विचारीने खोटी खोटी व्याधिनुं बानुं काढी तेमनाथी विशेष तप मायावडे कर्यो जेथी फोगट स्त्रीवेद बांध्यो.–' आवी

॥ ६५ ॥ अर्जिताहर्त्पदः स्थाने-विंशत्याराधितैस्ततः । मित्रैस्सह जयंतेऽभू-त्परमस्थितिकः सुरः ॥ ६६ ॥ मिथिलायां विदेहेषु ततः कुंभमहीपतेः । कुक्षौ राज्ञ्याः प्रभावत्याः पुत्रीत्वेनोदपद्यत ॥ ६७ ॥ जेत्री मोहादिमल्लानां ततो मल्लिरिति श्रुता । मातुर्वा माल्यशय्यायां दोहदात्ताहशाह्वया ॥ ६८ ॥ चतुर्थी फाल्गुने शुक्ला मार्गे चैकादशी सिता । मार्गे एकादशी शुभ्रा मार्गे चैकादशी सिता ॥ ६९ ॥ फाल्गुने द्वादशी शुभ्रा कल्याणकदिना अमी । चतुर्ष्वेष्वश्विनी धिष्ण्यं भरणी पंचमे पुनः ॥ ७० ॥ प्रभोर्गर्भस्थितिर्मासा नव सप्तदिनाधिकाः । राशिर्मेषो भगवत्याः कुंभो लक्ष्म प्रकीर्त्तितं ॥ ७१ ॥ पंचपंचाशता वर्ष-सहस्रैरूनके गते । सहस्रे वर्षकोटीनां निर्वाणात् श्रीअरप्रभोः ॥ ७२ ॥ जन्म मल्लिजिनस्याभू-च्छेषं तुर्यारकें तदा । जिनायुः शरदां लक्षाः ( ६५ ) सहस्राश्च ( ८४ ) पुरोदिताः ॥ ७३ ॥

शरच्छतं कुमारत्वे व्रते नवशताधिकाः । चतुष्पंचाशत्सहस्रा अहोरात्रमकेवली ॥ ७४ ॥ सहस्राः पंचपंचाश-च्छरदां सर्वजीवितं ।

---

पोतानो ज घात करनारी मायाने धिक्कार छे!' (६५) ते भवमां वीश स्थानकना आराधनवडे अरिहंतपद उपार्जन कर्युं. छए मित्रो साथे काळधर्म पामीने जयंत विमानमां उत्कृष्ट ( ३३ सागरोपम ) आयुवाळो देव थयो. ( ६६ ) त्यांथी च्यवीने महाबळ राजानो जीव विदेहदेशमां मिथिलानगरीमां कुंभ राजानी प्रभावती राणीनी कुक्षिथी पुत्रीपणे उत्पन्न थया. ( ६७ ) मोहादि मल्लोने जीतनार होवाथी तेम ज माताने माळानी शय्यामां सुवानो दोहद थवाथी मल्लि नाम स्थापन कर्युं. ( ६८ ) फाल्गुन शुदि ४, मार्गशीर्ष शुदि ११, मार्गशीर्ष शुदि ११, मार्गशीर्ष शुदि ११ ने फाल्गुन शुदि १२-ए पांच कल्याणकना दिवसो जाणवा. चार कल्याणकमां अश्विनी नक्षत्र अने पांचमा कल्याणकमां भरणी नक्षत्र जाणवुं (६९-७०) प्रभुनी गर्भस्थिति ९ मास ने ७ दिवसनी, राशि मेष अने लांछन कुंभनुं कहेलुं छे. ( ७१ ) श्रीअरनाथना निर्वाणथी ५५ हजार वर्षे न्युन एक हजार क्रोड वर्ष व्यतीत थये श्रीमल्लिनाथनो जन्म थयो. ते वखते चोथो आरो ६५ लाख ८४००० वर्ष अने ५५००० वर्ष बाकीमां हतो. (७२-७३)

तेमणे एक सो वर्ष कुमारावस्थामां ने ५४९०० वर्ष श्रमणावस्थामां व्यतीत कर्या. तेमां एक अहोरात्र ज छद्मस्थावस्थामां व्यतीत करी; बाकीनो बधो काळ केवळी अवस्थामां व्यतीत कर्यो. ( ७४ ) कुल ५५००० वर्षनुं आयु पूर्ण कर्युं. मल्लि-

समुच्छ्रयः शरीरस्य धनुषां पंचविंशतिः ॥ ७५ ॥ अयोध्यानगरीनेता चंपावाराणसीनृपौ । श्रावस्तीहस्तिनागेशौ कांपील्यपुरनायकः ॥ ७६ ॥ एतान् प्राग्जन्मसुहृदो विज्ञातस्वामिनीगुणान् । चित्रकृत्प्रमुखोदंतै-र्भूरिस्नेहवशीकृतान् ॥ ७७ ॥ समेतान् युगपत्पाणि-ग्रहाय प्रतिबोध्य च । स्वर्णस्वप्रतिमोपाया-त्सार्द्धं प्राव्राजयत्प्रभुः ॥ ७८ ॥ त्रिभिर्विशेषकं । जयंती शिबिका विश्व-सेनोऽदादाद्यपारणां । मिथिलानगरीवासी अशोको ज्ञानपादपः ॥ ७९ ॥

अष्टाविंशतिरादिष्टाः स्वामिन्या गणधारिणः । चत्वारिंशत्सहस्राणि साधूनां विशदात्मनां ॥ ८० ॥ साध्वीनां पंचपंचाश-त्सहस्राः कीर्त्तिताः श्रुते । श्रावकाणां लक्षमेकं सत्र्यशीतिसहस्रकं ॥ ८१ ॥ त्रिलक्षी श्राविकाणां च ससप्ततिसहस्रकाः । एवं चतुर्विधः संघः सद्गुणाढ्यः प्रभोरभूत् ॥ ८२ ॥ सर्वज्ञानां सहस्रे द्वे श्रीमल्लेर्द्विशताधिके । मनोविदां सहस्रं च सार्द्धसप्तशताधिकं ॥ ८३ ॥ द्वाविंशतिं शतान्याहु-रवधिज्ञानशालिनां । शतानि साष्टषष्टीनि षट् चतुर्दशपूर्विणां ॥ ८४ ॥ अत्रेयं मनोज्ञानिनामवधिज्ञानिनां संख्या सप्ततिशतस्थानकाभिप्रायेण,

---

प्रभुनुं शरीर पचवीश धनुष्यनुं हतुं. ( ७५ ) अयोध्या, चंपा, वाराणसी, श्रावस्ति, हस्तिनागपुर अने कांपिल्यपुरना स्वामी ए छ प्रभुना पूर्वजन्मना मित्रो हता. तेओ चित्रकार विगेरेना कहेवाथी प्रभुना गुणोने जाणीने अत्यंत स्नेहने वश थया. तेओ एक साथे पाणिग्रहण करवा आव्या. तेमने स्वर्णमय बनावेला पोताना प्रतिबिंबथी प्रतिबोध पमाडीने पोतानी साथे ज दीक्षा लेवरावी. ( ७६-७८ ) दीक्षावसरे शिबिका जयंती नामनी हती अने प्रथम पारणुं मिथिलानगरीवासी विश्वसेन राजाए कराव्युं हतुं. ज्ञानवृक्ष अशोक नामनुं हतुं. ( ७९ )

श्रीमल्लिनाथ प्रभुने २८ गणधर, पवित्र आत्मावाळा ४०००० साधुओ, ( ८० ) ५५००० साध्वीओ, १८३००० श्रावको, ( ८१ ) ३७०००० श्राविकाओ—आ प्रमाणे प्रभुनो सद्गुणाढ्य एवो चतुर्विध संघ थयो. ( ८२ ) श्रीमल्लिनाथने २२०० केवळज्ञानी, १७५० मनःपर्यवज्ञानी, ( ८३ ) २२०० अवधिज्ञानी, ६६८ चौदपूर्वी, ( ८४ ) ( अहीं मनोज्ञानी ने अवधिज्ञानीनी जे संख्या कही छे ते सप्ततिशतस्थानकने अभिप्राये कही

षष्ठांगे तु अष्ट शतानि मनोविदा, द्वे सहस्रे चावधिज्ञानिनां, तुर्यांगे तु सप्तपंचाशच्छतानि मनोविदामेकोनषष्टिश्च शतान्यवधिज्ञानिनामुक्तानीति ज्ञेयं. सवैक्रियाणामेकोन–त्रिंशतं प्रोचिरे शतान् । शतैश्चतुर्भिः सहितं सहस्रं वादिनां मतं ॥ ८५ ॥ भिषग्ज्येष्ठो गणी बंधु–मती चाभूत्प्रवर्त्तिनी । अजिताख्यो महीपालो–ऽभवद्भक्तो जगत्प्रभोः ॥ ८७ ॥ वरदं परशुं शूल–मभयं दक्षिणे दधत् । दोष्णां चतुष्टये वामे पुनः पाणिचतुष्टये ॥ ८७ ॥ बीजपूरं तथा शक्तिं मुद्गरं चाक्षसूत्रकं । दधानोऽष्टभुजो हस्ति–वाहनश्चतुराननः ॥ ८८ ॥ इंद्रायुधद्युतिर्यक्षः कूवरः कुरुते श्रियं । श्रीमल्लिनाथभक्तानां कुवेरोऽसौ मतांतरे ॥ ८९ ॥ वरदं चाक्षसूत्रं च या दक्षिणकरद्वये । बीजपूरं तथा शक्तिं धत्ते वामकरद्वये ॥ ९० ॥ पद्मासना श्यामवर्णा सा वैरोट्या चतुर्भुजा । पिपर्त्ति प्रार्थितं प्रीता श्रीमल्लिजिनसेवनात् ॥ ९१ ॥ इति श्रीमल्लिः ॥

शिवकेतुरभूत्पूर्वं सौधर्मे त्रिदशस्ततः । ततः कुवेरदत्तोऽथ

---

छे. छठ्ठा अंगमां तो ८०० मनोज्ञानी अने २००० अवधिज्ञानी कह्या छे. चोथा अंगमां ५७०० मनोज्ञानी अने ५९०० अवधिज्ञानी कह्या छे. ) २९०० वैक्रियलब्धिवाळा ने १४०० वादीओनो परिवार थयो. ( ८५ ) मुख्य गणधर भिषक् नामना, मुख्य साध्वी बंधुमती नामनी अने अजित नामनो राजा जगत् प्रभुनो भक्त थयो. ( ८६ ) कूवर नामनो यक्ष जमणा चार हाथमां वरद, परशु, शूळ ने अभय तथा डाबा चार हाथमां बीजपूर, शक्ति, मुद्गर ने अक्षसूत्रने धारण करनारो, आठ भुजावाळो, हाथीना वाहनवाळो, चार मुखवाळो, इंद्रायुध ( वज्र ) समान कांतिवाळो श्रीमल्लिनाथना भक्तोने लक्ष्मीने आपनारो थयो. तेनुं बीजुं नाम कुबेर मतांतरे छे. (८७–८९) प्रभुनी देवी वैरोट्या नामनी जमणा बे हाथमां वरद ने अक्षसूत्र ने डाबा बे हाथमां बीजपूर ने शक्तिने धारण करनारी, पद्मना आसनवाळी, श्याम वर्णवाळी, चार भुजावाळी श्रीमल्लिनाथनी सेवा करवाथी सेवा करनारना प्रार्थितने प्रीतिवडे पूर्ण करनारी थइ. ( ९०–९१ ) इति श्रीमल्लिः ॥

श्रीमुनिसुव्रतजिनवर्णन—पूर्वभवे शिवकेतु नामे राजा हता ते प्रथम स्वर्गे देव थया,

सुरः स्वर्गे तृतीयके ॥९२॥ वज्रकुंडलनामाथ ब्रह्मस्वर्गे सुरस्ततः । ततोऽस्मिन् भरतक्षेत्रे चंपापुर्यां रमाजुषि ॥ ९३ ॥ नृपः श्रीवर्म(ब्रह्म)नामाऽसौ सुनंदगुरुसन्निधौ । प्रव्रज्य परमायुष्को देवोऽभूदपराजिते ॥ ९४ ॥ ततो मगधदेशेऽभू–त्पुरे राजगृहे जिनः । पद्मावतीकुक्षिजन्मा सुमित्रनृपतेः सुतः ॥ ९५ ॥ पौर्णमासी श्रावणस्य कृष्णा ज्येष्ठस्य चाष्टमी । फाल्गुने द्वादशी शुक्ला द्वादशी फाल्गुनेऽसिता ॥ ९६ ॥ कृष्णा च ज्येष्ठनवमी कल्याणकदिना अमी । एषु सर्वेषु नक्षत्रं निर्दिष्टं श्रवणाह्वयं ॥ ९७ ॥ नव गर्भस्थितिर्मासाः प्रभोरष्टदिनाधिकाः । कूर्मोंको मकरो राशि–र्धनुर्विंशतिरुच्छ्रयः ॥ ९८ ॥ प्रभौ गर्भस्थिते माता मुनिवत्सुव्रताभवत् । स्वयं च सुव्रतस्तस्मा–न्नाम्नार्हन्मुनिसुव्रतः ॥९९॥ चतुष्पंचाशता वर्ष–लक्षैः श्रीमल्लिनिर्वृतेः । त्रिंशद्वर्षसहस्रोनै–र्जन्माभूत्सुव्रतप्रभोः ॥ ८०० ॥ लक्षाण्येकादशाब्दानां वेदनागसहस्रकाः । तुर्यारके स्म शिष्यंते युता श्रीसुव्रतायुषा ॥ १ ॥ कौमार्येऽब्दसहस्राणि

त्यांथी च्यवी कुबेरदत्त थइने त्रीजे स्वर्गे गया. ( ९२ ) त्यांथी वज्रकुंडळ थइने पांचमे देवलोके गया. त्यांथी च्यवी आ भरतक्षेत्रमां लक्ष्मीवडे युक्त चंपापुरीमां श्रीवर्म ( ब्रह्म ) नामे राजा थइ सुनंद गुरुनी पासे चारित्र लइने अपराजितविमानमां परमायुष्य ( ३३ सागरोपम ) वाळा देव थया. ( ९३–९४ ) त्यांथी च्यवीने मगध देशमां राजगृह नगरमां सुमित्र राजानी पद्मावती नामनी राणीनी कुक्षिथी पुत्रपणे जिनेश्वर जन्म्या. (९५) श्रावण शुदि १५, ज्येष्ठ वदि ८, फाल्गुन शुदि १२, फाल्गुन वदि १२ अने जेठ वदि ९—आ पांच कल्याणकना दिवसो जाणवा. पांचे कल्याणकमां नक्षत्र श्रवण जाणवुं. (९६–९७) गर्भस्थिति नव मास ने ८ दिवसनी, कूर्मनुं लांछन, मकरराशि अने २० धनुष्य उंचुं शरीर जाणवुं. ( ९८ ) प्रभु गर्भमां हता त्यारे माता मुनि जेवी सुव्रतवाळी थइ तेथी तेम ज पोते सुव्रतवाळा होवाथी तेमनुं नाम मुनिसुव्रत आपवामां आव्युं. ( ९९ ) श्रीमल्लिनाथना मोक्षथी त्रीश हजार वर्षे न्यून चोपन लाख वर्षे श्रीमुनिसुव्रतनो जन्म थयो. ( ८०० ) ते वखते चोथो आरो ११ लाख ८४००० वर्ष ने सुव्रतना आयुना ३०००० वर्ष जेटलो बाकीमां हतो. (८०१) मुनिसुव्रतस्वामी कौमारावस्थामां साडासात

१ त्रिषष्टिमां प्राणत देवलोक कहेल छे.

सप्त सार्द्धान्यथोषितः । राज्ये पंचदशाब्दानां सहस्राणि ततः पुनः ॥ २ ॥ सार्द्धान्यब्दसहस्राणि सप्त व्रतमपालयत् । त्रिंशदब्दसहस्राणि सर्वमायुरपालयत् ॥ ३ ॥ मोहापराजितस्यास्य शिबिका त्वपराजिता । पुरे राजगृहे ब्रह्म–दत्तोऽदादाद्यपारणां ॥ ४ ॥ मासा एकादश छद्म–स्थतामुष्य विभोर्मता । ज्ञानवृत्तश्चंपकोऽभू–दष्टादश गणाधिपाः ॥ ५ ॥ त्रिंशत्सहस्राः साधूनां साध्वीनां खशरै ( ५० )र्मिताः । श्राद्धानां लक्षमेकं च द्वासप्ततिसहस्रयुक् ॥ ६ ॥ सार्द्धास्त्रिलक्षाश्चार्हत्यः सर्वज्ञानां तथा शताः । अष्टादश पंचदश मनःपर्यायवेदिनां ॥ ७ ॥ अवधिज्ञानभाजाम–प्यष्टादश शताः स्मृताः । शतानि पंच दधतां पूर्वाणि च चतुर्दश ॥ ८ ॥ सवैक्रियाः सहस्रे द्वे वादिनां द्विशताधिकं । सहस्रमेकं गणभृ–न्मुख्यो मल्लिरिति श्रुतः ॥ ९ ॥ प्रवर्त्तिनी पुष्पवती सदाभक्तनृपः प्रभोः । विजिताख्योऽभवद्यक्षो वरुणश्चतुराननः ॥ १० ॥ बीजपूरं गदां बाणं शक्तिं करचतुष्टये । दक्षिणे नकुलं पद्मं धनुः पर्शुं च वामके ॥ ११ ॥ दधानोऽष्टभुजः सौख्यं कुर्याद् वृषभवाहनः । त्रिलो·

---

हजार वर्ष रह्या, राज्यावस्थामां पंदर हजार वर्ष रह्या ( २ ) अने साडासात हजार वर्ष सुधी व्रतनुं पालन कर्युं–ए प्रमाणे कुल ३० हजार वर्षना आयुष्यनी प्रतिपालना करी. ( ३ ) मोहथी नहीं जीतायेला एवा आ प्रभुना दीक्षावसरनी शिबिका अपराजिता नामनी हती, राजगृहनगरमां ब्रह्मदत्त राजाए प्रथम पारणुं कराव्युं. ( ४ ) ११ मासनो छद्मस्थपर्याय हतो. ज्ञानवृक्ष चंपक नामनुं हतुं. मुनिसुव्रतस्वामीना परिवारमां १८ गणधर, ( ५ ) ३०००० साधुओ, ५०००० साध्वीओ, १७२००० श्रावको, ( ६ ) ३५०००० श्राविकाओ, १८०० केवळज्ञानी, १५०० मनःपर्यवज्ञानी ( ७ ) १८०० अवधिज्ञानी, ५०० चौदपूर्वी, ( ८ ) २००० वैक्रियलब्धिवाळा अने १२०० वादी थया. मल्लि नामे मुख्य गणधर, ( ९ ) पुष्पवती नामे प्रवर्त्तिनी अने विजित नामनो राजा सदा प्रभुनो भक्त थयो. वरुण नामनो यक्ष चार मुखवाळो, बीजपूर, गदा, बाण ने शक्ति जमणा चार हाथमां अने नकुल, पद्म, धनु ने परशु डाबा चार हाथमां धारण करनारो कुल आठ भुजावाळो, वृषभना वाहनवाळो, त्रण लोचनवाळो, श्वेत वर्णवाळो, जटा मुकुटथी भूषित एवो ते प्रभुना भक्तोने सुख करनारो थयो.

चनः श्वेतवर्णो जटामुकुटभूषितः ॥ १२ ॥ वरदं चाक्षसूत्रं च या दक्षिणकरद्वये । धत्ते तथा बीजपूरं शक्तिं वामकरद्वये ॥ १३ ॥ सा भद्रासनमारूढा स्वर्णवर्णा चतुर्भुजा । तस्याच्छुप्ता वभौ देवी नरदत्ता मतांतरे ॥ १४ ॥ इति श्रीमुनिसुव्रतः ॥

जंबूद्वीपस्य भरते कौशांव्यां पुरि भूपतिः । सिद्धार्थो नंदगुर्वंते परिव्रज्यामुपाददे ॥ १५ ॥ ततोऽभूत्प्राणतस्वर्गे विंशत्यर्णवजीवितः । उदात्तवैभवो देव–स्ततश्च्युत्वा स्थितिक्षये ॥ १६ ॥ विदेहदेशे मिथिला–पुर्यां विजयभूपतेः । वप्राराज्ञीकुक्षिरत्नं नमिनामा जिनोऽभवत् ॥ १७ ॥ आश्विनस्य पौर्णमासी श्रावणस्यासिताष्टमी । नवम्याषाढस्य कृष्णा मार्गस्यैकादशी सिता ॥ १८ ॥ राधस्य दशमी कृष्णा कल्याणकदिना इति । सर्वेष्वप्यश्विनी धिष्ण्यं राशिर्मेषः स्मृतः प्रभोः ॥ १९ ॥ अष्टघस्राधिका मासा नवाभूद्गर्भस्थितिः । नीलाब्जं लक्ष्म चापानि देहः पंचदशोच्छ्रितः ॥ २० ॥ गर्भस्थिते प्रभौ द्रंग–रोधिनो रिपवो

---

( १०–१२ ) देवी अच्छुप्ता नामनी जमणा बे हाथमां वरद ने अक्षसूत्र अने डावा बे हाथमां बीजपुर ने शक्तिने धारण करनारी, भद्रासनपर आरूढ थयेली, स्वर्ण सरखा वर्णवाळी, चार भुजावाळी थइ. तेनुं मतांतरे नरदत्ता एवुं बीजुं नाम छे. ( १३–१४ ) इति श्रीमुनिसुव्रतः ॥

श्रीनमिनाथ वर्णन—जम्बूद्वीपना भरतक्षेत्रमां कौशांबीपुरीमां सिद्धार्थ नामे राजा हतो. तेणे नंदगुरुनी पासे चारित्र अंगीकार कर्युं. ( १५ ) मरण पामीने प्राणत नामना दशमा देवलोकमां वीश सागरोपमने आउखे मोटी समृद्धिवाळो देव थयो. स्थितिक्षये त्यांथी च्यवीने विदेहदेशमां मिथिला नगरीमां विजय राजानी वप्रा राणीनी कुक्षिथी नमि नामे पुत्रपणे उत्पन्न थइ तीर्थंकर थया. ( १६–१७ ) आश्विन शुदि १५, श्रावण वदि ८, आषाढ वदि ९, मागशर शुदि ११ अने वैशाख वदि १०—ए पांच कल्याणकना दिवसो जाणवा. पांचे कल्याणकमां नक्षत्र अश्विनी जाणवुं. प्रभुनी राशि मेष जाणवी. ( १८–१९ ) गर्भस्थिति नव मास ने आठ दिवसनी, नील कमळनुं लांछन अने पंदर धनुष्य उंचो देह जाणवो. ( २० ) प्रभु गर्भमां हता त्यारे किल्लाने रोकीने रहेला

नताः । तस्मान्नाम्ना नमी रागा–द्यरीणां नमनेन वा ॥ २१॥ षड्भिश्च शरदां लक्षै–र्मुनिसुव्रतनिर्वृतेः । दशवर्षसहस्रोनै–रजायत नमिप्रभुः ॥ २२ ॥ लक्षाणि पंच वर्षाणां सहस्रा वार्द्धिदिग्मिताः ( ८४ ) । जिनायुश्चावशिष्यंते तदा तुर्यारके ध्रुवं ॥ २३ ॥ सार्द्धे वर्षसहस्रे द्वे कुमारत्वेऽवसद्विभुः । पंच वर्षसहस्राणि प्राज्यं राज्यमपालयत् ॥ २४ ॥ पुनः सार्द्धे सहस्रे द्वे पालयामास संयमं । दशाब्दानां सहस्राणि सर्वमायुरपूपुरत् ॥ २५ ॥ शिबिका देवकुर्वाख्या श्रीनमिस्वामिनो व्रते । आद्यां वीरपुरे भक्त्या दिन्नो दत्ते स्म पारणां ॥ २६ ॥ मासा नवैव छाद्मस्थ्यं बकुलो ज्ञानभूरुहः । प्रभोर्गणभृतः सप्त–दश पेशलसंयमाः ॥ २७ ॥ महर्षीणां सहस्राणि विंशतिः कीर्त्तितान्यथ । साध्वीनामेकचत्वारिं–शदेव च सहस्रकाः ॥ २८ ॥ लक्षं सहस्रैः सप्तत्या समन्वितमुपासकाः । लक्षास्तिस्रोऽष्टचत्वारिं–शत्सहस्राण्युपासिकाः ॥२९॥ केवलज्ञानिनामेकं सहस्रं षट्शताधिकं । शता द्वादश पंचाशाः षष्ट्याढ्या वा मनोविदां ॥ ३० ॥ अवधिज्ञानिनां षड्भिः सहस्रमधिकं शतैः ।

---

राजाओ आवीने नम्या तेथी तेम ज रागादि शत्रुओने नमावनार होवाथी नमि नाम स्थापन करवामां आव्युं. ( २१ ) मुनिसुव्रतस्वामीना निर्वाणथी दश हजार वर्षे न्यून छ लाख वर्ष व्यतीत थये नमिनाथनो जन्म थयो. ( २२ ) ते वखते चोथो आरो पांच लाख ८४००० वर्ष अने प्रभुना आयुना १०००० वर्ष जेटलो बाकी रह्यो हतो. ( २३ ) नमिप्रभुए अढी हजार वर्ष कुमारपणामां व्यतीत कर्या, पांच हजार वर्ष प्राज्य एवा राज्यनी प्रतिपालना करी ( २४ ) अने अढी हजार वर्ष चारित्रनी प्रतिपालना करी. ए रीते दश हजार वर्षनुं आयुष्य पूर्ण कर्युं. ( २५ ) नमिस्वामीना दीक्षावसरे शिबिका देवकुरु नामनी हती, प्रथम पारणुं वीरपुरीमां दिन्न नामना राजाए भक्तिपूर्वक कराव्युं. ( २६ ) प्रभुनो छद्मस्थपर्याय नव मासनो हतो, ज्ञानवृक्ष बकुल नामनुं हतुं. नमिप्रभुना परिवारमां १७ गणधर, शुद्ध संयमवाळा ( २७ ) २०००० महर्षिओ, ४१००० साध्वीओ, ( २८ ) १७०००० श्रावको, ३४८००० श्राविकाओ, ( २९ ) १६०० केवळज्ञानीओ, १२५० अथवा १२६० मनःपर्यवज्ञानी, ( ३० ) १६००

चतुर्दशपूर्वभृता–मध्यर्द्धा च चतुःशती ॥ ३१ ॥ सहस्रं वादिनां पंच–सहस्रा वैक्रियस्पृशां । शुभाख्यो गणभृन्मुख्यो–ऽनिलाख्या च प्रवर्त्तिनी ॥ ३२ ॥ प्रभोर्भक्तनृपश्चक्री हरिषेणाभिधोऽभवत् । यत्तश्च भृकुटिर्ज्ञेया–चतुर्वक्त्रस्त्रिलोचनः ॥ ३३ ॥ सुवर्णवर्णो वृषभ–वाहनो दक्षिणैर्भुजैः । बीजपूरं तथा शक्तिं मुद्गरं चाभयं दधत् ॥ ३४ ॥ वामैश्च नकुलं पर्शुं वज्रमेवाक्षसूत्रकं । दधानोऽष्टभुजः सम्यग्दृष्टिः प्रीणाति धार्मिकान् ॥ ३५ ॥ दधाना वरदं खड्ग–मपसव्ये करद्वये । बीजपूरककुंताभ्यां व्यग्रवामकरद्वया ॥ ३६ ॥ चतुर्भुजा श्वेतवर्णा गांधारी हंसवाहना । देवी दिशति कल्याणं श्रीनमिस्वामिसेविनां ॥ ३७ ॥ इति श्रीनमिः ॥

अभूद्राजा धनस्तस्य नाम्ना धनवती प्रिया । दंपती तावभूतां द्वौ सुरौ सौधर्मताविषे ॥ ३८ ॥ खेटश्चित्रगतिस्तस्य प्रिया रत्नवतीति तौ । भवे तृतीये जज्ञाते सौधर्मस्वर्गतश्च्युतौ ॥ ३९ ॥ ततो माहेंद्रनाके तौ देवौ जातौ प्रियौ मिथः । ततो धनस्य जीवोऽभू–द्राजा

---

अवधिज्ञानी, ४५० चौदपूर्वी, ( ३१ ) १००० वादी अने ५००० वैक्रियलब्धिवाळा मुनिओ हता. मुख्य गणधर शुभ नामना, प्रवर्त्तिनी अनिला नामनी ( ३२ ) अने हरिषेण चक्री प्रभुनो भक्त हतो. भृकुटि नामनो यक्ष चार मुखवाळो, त्रण लोचनवाळो, सुवर्णसमान वर्णवाळो, वृषभना वाहनवाळो, चार जमणी भुजामां बीजपूर, शक्ति, मुद्गर ने अभय तथा चार वाम भुजामां नकुल, परशु, वज्र ने अक्षसूत्रने धारण करनारो, आठ भुजावाळो अने सम्यग्दृष्टि धार्मिकजनोने प्रेम करनारो थयो. ( ३३–३५ ) गांधारी नामे देवी जमणा बे हाथमां वरद ने खड्ग तथा डाबा बे हाथमां बीजपूरक ने कुंतने धारण करनारी, चार भुजावाळी, श्वेत वर्णवाळी, हंसना वाहनवाळी श्रीनमिस्वामीने सेवन करनारनुं कल्याण करनारी थइ. ( ३६–३७ ) इति श्रीनमिः ॥

श्रीनेमिनाथवर्णन—पूर्वभवमां धन नामे राजा अने तेनी धनवती नामे प्रिया ते दंपती मरण पामीने सौधर्म देवलोकमां बंने देव थया. ( ३८ ) त्यांथी च्यवीने चित्रगति नामे विद्याधर ने तेनी प्रिया रत्नवती नामे त्रीजा भवे थया. ( ३९ ) तेओ मरण पामीने माहेंद्र नामना चोथा देवलोकमां बंने देव थया. त्यांथी च्यवीने धननो

नाम्नापराजितः ॥ ४० ॥ धनवत्याश्च जीवोऽभू-दपराजितभूपतेः । राज्ञी प्रीतिमती जातौ ततो द्वावारणे सुरौ ॥ ४१ ॥ ततोऽपराजितस्यात्मा सुप्रतिष्ठाभिधो नृपः । मतांतरेऽभूच्छंखाख्यो जंबूद्वीपस्य भारते ॥ ४२ ॥ पुरे राजगृहेऽथास्य प्रियैवाभूद्यशोमती । जीवश्च्युत्वा प्रीतिमत्याः स्वर्गादारणसंज्ञकात् ॥ ४३ ॥ गुरोरतिंयशःपार्श्वा-त्तावुरीकृत्य संयमं । ज्येष्ठायुष्कौ सुहृद्देवौ जातौ द्वावपराजिते ॥ ४४ ॥ जीवोऽथ यो यशोमत्याः स च च्युत्वापराजितात् । अजायतोग्रसेनस्य नाम्ना राजीमती सुता ॥ ४५ ॥ सुप्रतिष्ठस्य जीवोऽथ ततश्च्युत्वापराजितात् । समुत्पेदे कुशार्त्ताख्ये देशे शौर्यपुरे पुरे ॥ ४६ ॥ समुद्रविजयाख्यस्य दशार्हस्य महीपतेः । सुतोऽभवच्छिवादेवी-कुक्षिजन्मा जिनेश्वरः ॥ ४७ ॥ कार्त्तिके द्वादशी कृष्णा श्रावणे पंचमी सिता । षष्ठी च श्रावणे शुक्ला-मावास्याश्विनमासि च ॥ ४८ ॥ आषाढस्याष्टमी शुक्ला कल्याणकदिनाः प्रभोः । चित्रानक्षत्रमेतेषु राशिः कन्याह्वयः स्मृतः ॥ ४९ ॥ दिनैरष्टाभिरधिका मासा गर्भस्थितिर्नव । शंखो लक्ष्म दशे-

---

जीव अपराजित नामे राजा थयो ( ४० ) अने धनवतीनो जीव अपराजित राजानी राणी प्रीतिमती नामे थयो. त्यांथी मरण पामीने ते बंने आरण नामना अग्यारमा देवलोकमां देवपणे उत्पन्न थया. ( ४१ ) त्यांथी च्यवीने अपराजितनो जीव सुप्रतिष्ठ नामनो मतांतरे शंख नामनो जंबूद्वीपना भरतक्षेत्रमां राजगृहनगरमां राजा थयो. प्रीतिमतीनो जीव आरण नामना देवलोकथी च्यवीने ते राजानी यशोमती नामे प्रिया तरीके थयो. ( ४२-४३ ) अतियश नामना गुरु पासे संयम ग्रहण करीने ते बंने अपराजित विमानमां उत्कृष्ट आयुवाळा मित्र देव थया. ( ४४ ) अपराजित विमानथी च्यवीने यशोमतीनो जीव उग्रसेन राजानी राजीमती नामे पुत्री थयो. ( ४५ ) सुप्रतिष्ठनो जीव अपराजित विमानथी च्यवीने कुशार्त्त देशमां शौर्यपुर नामना नगरमां समुद्रविजय नामना दशार्ह महीपतिनी शिवादेवी राणीनी कुक्षिमां उत्पन्न थइ जिनेश्वर थयो. (४६-४७) कार्त्तिक वदि १२, श्रावण शुदि ५, श्रावण शुदि ६, आश्विन वदि ०)) अने आषाढ शुदि ८-ए पांच कल्याणकना दिवसो जाणवा. ए पांचे कल्याणकमां नक्षत्र चित्रा जाणवुं. राशि कन्या नामनी जाणवी. ( ४८-४९ ) नव मास ने आठ दिवसनी गर्भस्थिति, शंखनुं लांछन अने दश धनुष्यनुं शरीर जाणवुं. ( ५० )

---

१ अतियशसः इति भिन्ने वक्तव्ये समासश्चिन्त्यः,

प्वास-प्रमितो वपुरुच्छ्रयः ॥ ५० ॥ रिष्टरत्नमयीं चक्र-धारामैक्षत यत्प्रसूः । प्रभौ गर्भस्थिते रिष्ट-नेमिरित्याख्यया ततः ॥ ५१ ॥ अमंगलव्यपोहाया-ऽकारोऽत्र परिभाव्यतां । पापवृत्ते चक्रधारा-तुल्यो वा तत्तथाह्वयः ॥ ५२ ॥ एकवर्षसहस्रोनैः पंचभिः शरदां गतैः । लक्षैः श्रीनमिनिर्वाणात् श्रीनेमिरुदपद्यत ॥५३॥ श्रीनेमिगर्भावसरे पंचाशीतिः सहस्रकाः । शेषास्तुर्यारकेऽब्दानां जिनायुर्युक्तया(क्ता चा)भवन् ॥५४॥

कदाचित्कौतुकान्नेमि-र्वयस्यप्रेरितो ययौ । हरेरायुधशालायां तत्रा-स्त्राण्यखिलान्यपि ॥ ५५ ॥ लीलया कलयामास पांचजन्ये च वादिते । त्रस्तातुराश्वेभनरा सा पुरी चुक्षुभेऽखिला ॥ ५६ ॥ कृष्णोऽपि द्रुतमा-गत्य परीक्ष्य च विभोर्बलं । विषसादेति राज्यं मे सुखेनैष ग्रहीष्यति ॥ ५७ ॥ तत आकाशवागेव-मभून्नेमिरयं जिनः । प्रव्रजिष्यति कौमार्ये इत्युक्तं नमिनार्हता ॥ ५८ ॥ अभ्यर्थितो विवाहाय जलक्रीडामिषात्ततः । सांतःपुरेण कृष्णेन नर्ममर्मचटूक्तिभिः ॥ ५९ ॥ कृते मौने भगवता

---

माताए प्रभु गर्भमां हता त्यारे स्वप्नमां रिष्टरत्नमयी चक्रधारा जोयेली होवाथी रिष्टनेमि एवुं प्रभुनुं नाम प्रख्यात थयुं. (५१) रिष्ट शब्द अमंगलसूचक छे तेथी तेने दूर करवा माटे अ अक्षर उमेरीने अरिष्टनेमि कर्युं. अथवा प्रभु पापरूपी वृक्षमां चक्रधारातुल्य होवाथी ते रिष्टनेमि नाम पण यथार्थ थयुं. (५२) श्रीनमिनाथना निर्वाणथी एक हजार वर्ष न्यून पांच लाख वर्ष व्यतिक्रम्ये सते श्रीनेमिनाथनो प्रादुर्भाव थयो. (५३) श्रीनेमि-नाथनी गर्भोत्पत्ति वखते तेमना आयुष्यसहित ८५००० वर्ष चोथो आरो शेष रह्यो हतो. (५४)

अन्यदा कदाचित् नेमिकुमार मित्रोनी प्रेरणाथी कृष्णवासुदेवनी आयुधशाळामां गया. त्यां रहेला बधा अस्त्रो लीलावडे कळी लीधा-तेनो उपयोग जाणी लीधो. पछी पांचजन्य शंख वगाड्यो. तेना स्वरथी हाथी, घोडा अने मनुष्यो त्रास पाम्या. आखी नगरी घोभायमान थइ. (५५-५६) कृष्ण उतावळे त्यां आव्या अने प्रभुना बळनी परीक्षा करीने खेद पाम्या. तेणे धार्युं के-'आ मारुं राज्य सुखे ग्रहण करी शकशे.' (५७) ते वखते आकाशवाणी थइ के-'आ नमिकुमार कौमारावस्थामां ज चारित्र ग्रहण करशे, एम नमिनाथ प्रभु कही गया छे.' (५८) पछी जळक्रीडाना मिषथी हास्य ने मर्मयुक्त चाटु उक्तिवडे अंतःपुरसहित कृष्णे विवाहने माटे नेमिप्रभुनी प्रार्थना करी. (५९) प्रभु मौन रह्या एटले सौए उद्घोषणा करी के-' विवाह स्वीकार्यो.' 'निषेध

सर्वैरुद्घोषितं ततः । विवाहः स्वीकृत इति न निषिद्धं हि संमतं ॥६०॥ ततः साडंबरं राजी–मत्याः कर्तुं करग्रहं। ययौ मुक्त्याप्तिसंकेत–मिव कर्तुं प्रियस्त्रियाः ॥ ६१ ॥ ततो जन्यजनातिथ्यं कर्तुमार्त्तान्नियंत्रितान् । पशून् वीक्ष्य परावृत्तः स प्राव्राजीद्दयामयः ॥६२॥ शतानि शरदां त्रीणि कुमारत्वेऽथ संयमे । शतानि सप्त सर्वायुः सहस्रं शरदां प्रभोः ॥ ६३ ॥ चतुष्पंचाशद्दिनानि छाद्मस्थ्यमभवद्विभोः । वरदत्तो द्वारिकाया–माद्यभिक्षां प्रभोर्ददौ ॥ ६४ ॥ शिबिका द्वारवत्याख्या वेतसो ज्ञानभूरुहः । अष्टादश गणाधीशा एकादश मतांतरे ॥ ६५ ॥ अष्टादश सहस्राः स्युः साधूनां गुणशालिनां । चत्वारिंशत्सहस्राश्च साध्वीनां विमलात्मनां ॥ ६६ ॥ श्रावकाणां लक्षमेको–नसप्ततिसहस्रयुक् । लक्षास्तिस्रः सहस्राः षट् त्रिंशच्चोपासिका मताः ॥ ६७ ॥ सातिरेकं पंचशत्या सहस्रं सर्ववेदिनां । सहस्रमेकं संपूर्णं मनःपर्यायवेदिनां ॥ ६८ ॥ सहस्रमवधिज्ञान–भाजां पंचशताधिकं । शतानि तस्य चत्वारि सच्चतुर्दशपूर्विणां ॥ ६९ ॥ लसद्वैक्रियलब्धीनां शताः पंचदशोदिताः । वादिनां स्युः

---

न कर्यो ते संमत गणाय छे.' ( ६० ) पछी आडंबरसाथे राजीमतीनुं पाणीग्रहण करवा माटे चाल्या, ते जाणे पूर्वभवोनी प्रिय प्रियाने मोक्षप्राप्तिनो संकेत करवा गया होय एम लाग्युं. ( ६१ ) त्यां जतां मार्गमां जानमां आवनार अतिथिओनुं आतिथ्य करवा माटे नियंत्रित करेला पशुओनो आर्त्तस्वर सांभळीने दयामय एवा प्रभु पाछा वळ्या ने संयम ग्रहण कर्युं. ( ६२ ) नेमिप्रभुए कुमारावस्थामां त्रण सो वर्ष ने श्रमणावस्थामां सात सो वर्ष व्यतिक्रमाव्या. एकंदर हजार वर्षनुं आयुष्य पाळ्युं. ( ६३ ) प्रभुनो छद्मस्थकाळ मात्र ५४ दिवसनो ज थयो. प्रथम भिक्षा द्वारिकापुरीमां वरदत्ते प्रभुने आपी. ( ६४ ) दीक्षा अवसरे शिबिका द्वारवती नामनी हती अने ज्ञानवृक्ष वेतस नामनुं हतुं.

नेमिप्रभुना परिवारमां १८ मतांतरे ११ गणधर, ( ६५ ) गुणशाळी एवा १८००० मुनिओ, निर्मळ आत्मावाळी चाळीश हजार साध्वीओ, ( ६६ ) १६९००० श्रावको, ३३६००० श्राविकाओ, ( ६७ ) १५०० केवळज्ञानी, १००० मनःपर्यवज्ञानी, ( ६८ ) १५०० अवधिज्ञानी, ४०० चौदपूर्वी, ( ६९ ) १५०० वैक्रियलब्धिवाळा अने देवोथी

शतान्यष्टा–वजय्यानां सुरैरपि ॥ ७० ॥ वरदत्तो गणी मुख्यो यक्षदिन्ना प्रवर्त्तिनी । पितृव्यपुत्रः कृष्णाख्यो वासुदेवश्च सेवकः ॥ ७१ ॥ मातुलिंगं च परशुं बिभ्रच्चक्रं च दक्षिणे । करत्रयेऽथ नकुलं शूलं शक्तिं च वामके ॥ ७२ ॥ गोमेधयक्षस्त्रिमुखः श्यामः पुरुषवाहनः । षड्भुजो नेमिभक्तानां वितनोति समीहितं ॥ ७३ ॥ आम्रलुंबिपाशयुक्ता–पसव्य-करयामला । पुत्रांकुशव्यप्रवाम–करयुग्माधिकद्युतिः ॥ ७४ ॥ मृगेंद्र-वाहना जात्य–स्वर्णज्योतिश्चतुर्भुजा । श्रीनेमिभक्तान् पात्यंबा–देव्यंबेव हितावहा ॥ ७५ ॥ इति श्रीनेमिः ॥

कमठो मरुभूतिश्च द्वावभूतां सहोदरौ । ब्राह्मणौ कमठस्तत्र भ्रातुर्जायामरीरमत् ॥ ७६ ॥ ज्ञातः कुर्वंस्तमन्यायं कदाचिन्मरुभूतिना । भूपाय ज्ञापितस्तेना–प्यन्यायीति विडंबितः ॥ ७७ ॥ अनात्मज्ञस्ततश्चासौ भ्रातरि द्वेषमुद्वहन् । तापसोऽभूत्सोदरेण खिस्यमानश्च तं न्यहन् ॥ ७८ ॥ मरुभूतिरभून्मृत्वा श्वेतेभः कमठः पुनः । महाविषः कुर्कुटाहि–

---

पण अजय्य एवा ८०० वादी थया. ( ७० ) गणधरमां मुख्य वरदत्त, प्रवर्त्तिनी यक्षदिन्ना अने काकाना पुत्र कृष्ण वासुदेव मुख्य सेवक थया. ( ७१ ) गोमेध नामनो यक्ष जमणी बाजुना त्रण हाथमां मातुलिंग, परशु ने चक्र अने डाबी बाजुना त्रण हाथमां नकुल, शूळ ने शक्तिने धारण करनारो, त्रण मुखवाळो, श्यामवर्णवाळो, पुरुषना वाहनवाळो अने छ भुजावाळो नेमिनाथना भक्तोना वांछित पूरनार थयो. ( ७२–७३ ) अने अंबा नामे देवी जमणा बे हाथमां आम्रलुंबी ने पाश तथा डाबा बे हाथमां पुत्र ने अंकुशने धारण करनारी, अधिक कांतिवाळी, सिंहना वाहनवाळी, जातिवंत स्वर्ण जेवा वर्णवाळी, चार भुजावाळी श्रीनेमिनाथना भक्तनी मातानी जेवी हितावह ने रक्षण करनारी थइ. ( ७४–७५ ) इति श्रीनेमिः ॥

श्रीपार्श्वनाथवर्णन—कमठ अने मरुभूति नामे बे सहोदर बंधु ब्राह्मणजातिना हता, तेमां कमठ भाइनी स्त्रीसाथे लुब्ध थयो. ( ७६ ) आवो अन्याय करता तेने एक वखत मरुभूतिए जाण्यो एटले तेणे ते हकीकत राजाने जणावी. राजाए कमठने अन्यायी जाणीने तेनी विडंबना करी (काढी मूक्यो). ( ७७ ) अनात्मज्ञ (पोतानी भूलने नहीं समजनार) एवो ते भाइनी उपर द्वेष वहन करतो मतो तापस थयो. भाइए तेनी वधारे फजेती करी तेथी तेणे तेने हणी नाख्यो. ( ७८ ) मरुभूति मरण पामीने श्वेत

दंष्टस्तेनाहिना मृतः ॥ ७९ ॥ गजः सुरः सहस्रारे स सर्पोऽभूच्च नारकः । नारकोऽभूत्पुनः सर्पः स देवोऽभूच्च खेचरः ॥ ८० ॥ खेचरोऽथाच्युतस्वर्गे सर्पश्च नरके ययौ । ततोऽच्युतसुरः पृथ्वी–नाथोऽभूच्छवरः परः ॥ ८१ ॥ राजा ग्रैवेयके देवः शबरोऽभूच्च नारकः । नारकोऽसौ मृगेंद्रोऽभूद्–ग्रैवेयकः सुरः पुनः ॥ ८२ ॥ अयोध्यायां महापुर्यां जंबूद्वीपस्य भारते । आनंदनामा भूपोऽभू–द्दामोदरगुरोः स च ॥ ८३ ॥ पार्श्वचरित्रे तु महाविदेहे सुवर्णबाहुनामा चक्री अष्टमभवे भगवानासीदिति दृश्यते. चारित्रं प्राप्य सिंहेन तेन क्षुण्णोऽपि स क्षमः । देवोऽभूत्प्राणतस्वर्गे विंशत्यंभोनिधिस्थितिः ॥ ८४ ॥ सिंहश्च मृत्वा नरके ययावेवं च पंचसु । भवेषु मरुभूत्यात्मा मारितः कमठात्मना ॥ ८५ ॥ ततः कमठजीवोऽसा–वुध्धृत्य नरकात्ततः । कठो दरिद्रविप्रोऽभू–त्क्रमाद्दुःखेन तापसः ॥ ८६ ॥ मरुभूतेरथो जीव–श्च्युत्वा प्राणतताविपात् । काशीदेशे वाराणस्यां पुर्यामाश्चर्यकृच्छ्रियां ॥ ८७ ॥ अश्वसेनस्य

---

हाथी थयो. कमठ महाविषवाळो कुर्कुट जातिनो सर्प थयो. तेना डसवाथी हाथी मरण पाम्यो. ( ७९ ) ते आठमा सहस्रार देवलोकमां देव थयो. ते सर्प नारकी थयो. नरकमांथी नीकळीने ते पाछो सर्प थयो. देव च्यवीने खेचर ( विद्याधर ) थयो. ( ८० ) खेचर मरण पामीने बारमा देवलोके गयो. सर्प मरीने नरके गयो. अच्युतदेव च्यवीने पृथ्वीनाथ ( राजा ) थयो. बीजो नरकमांथी नीकळीने भिल्ल थयो. ( ८१ ) राजा मरण पामीने ग्रैवेयकमां देव थयो. भिल्ल नरके गयो. ते नारकी त्यांथी नीकळीने सिंह थयो. ग्रैवेयकसुर त्यांथी च्यवीने जंबूद्वीपना भरतमां अयोध्या नामनी महापुरीमां आनंद नामे राजा थयो. ( पार्श्वनाथचरित्रमां आठमे भवे महाविदेहमां सुवर्णबाहु नामे चक्री थया एम जणावेल छे. ) हवे आनंद राजा दामोदर नामना गुरुपासे चारित्र अंगीकार करीने सिंहना पराभवथी मरण पामी प्राणत नामना दशमा स्वर्गमां वीश सागरोपमनी स्थितिवाळा देव थया. ( ८२–८४ ) सिंह मरण पामीने नरके गयो. आ प्रमाणे पांच भवमां कमठना जीवे मरुभूतिना जीवने मरण पमाड्यो. ( ८५ ) कमठनो जीव नारकीमांथी उद्धरीने कठ नामनो दरिद्री ब्राह्मण थयो. ते अनुक्रमे दुःखने लीधे तापस थयो. ( ८६ ) मरुभूतिनो जीव प्राणत देवलोकथी च्यवीने काशीदेशमां आश्चर्य उत्पन्न करे तेवी शोभावाळी वाराणसी नगरीमां अश्वसेन राजानी वामाराणीनी कुक्षिरूप शुक्तिथी

भूभर्त्तुः। सुतोऽद्भुतगुणोत्तरः। वामाराज्ञीकुक्षिशुक्ति-मुक्ताफलमभूज्जिनः ॥ ८८ ॥ कृष्णा चतुर्थी चैत्रस्य पौषस्य दशमी सितिः। पौषस्यैकादशी कृष्णा चतुर्थी चासिता मधौ ॥ ८९ ॥ श्रावणस्याष्टमी शुक्ला कल्याणानां दिना इमे। विशाखाधिष्ण्यमेतेषु राशिश्च स्वामिनस्तुला ॥ ९० ॥ प्रभोर्गर्भस्थितिर्मासा नव षड्भिर्दिनैर्युताः। भुजंगो लांछनं हस्ता नवैव वपुरुच्छ्रयः ॥ ९१ ॥ रात्रौ यांतमहिं पार्श्वे-ऽपश्यद्गर्भच्चणे प्रसूः। ततः पार्श्वाभिधः स्वामी त्रैलोक्यं पश्यतीति वा ॥ ९२ ॥ श्रीनेमिनाथनिर्वाणात् त्र्यशीत्याब्दसहस्रकैः। अध्यर्द्धषट्शतोपेतैः श्रीपार्श्वोऽजायत प्रभुः ॥ ९३ ॥ वामेयगर्भकालेऽस्य चतुर्थस्यारकस्य च। सार्द्धाः शतास्त्रयोऽब्दाना-मवशिष्टतया स्थिताः ॥ ९४ ॥ त्रिंशदब्दानि कौमार्ये व्रते वर्षाणि सप्ततिः। दिनानि तत्र चतुर-शीतिश्छाद्मस्थ्यमीरितं ॥ ९५ ॥ सर्वायुः शतमब्दानां विशाला शिबिका व्रते। धन्यः कोपकटग्रामे पारणां प्रथमां ददौ ॥ ९६ ॥

पंचाग्नीन् साधयन् कष्टं सासहिः कठतापसः। प्रभुणा दर्शिते

---

मुक्ताफळ समान अद्भुत गुणोवाळो पुत्र थयो. (८७-८८) चैत्र वदि ४, पोस वदि १०, पोस वदि ११, चैत्र वदि ४ अने श्रावण शुदि ८-ए पांच कल्याणकनी तिथि जाणवी. पांचे कल्याणकमां विशाखा नक्षत्र जाणवुं अने स्वामीनी राशि तुला जाणवी. (८९-९०) गर्भस्थिति नव मास ने छ दिवसनी, सर्पनुं लांछन अने नव हाथ शरीरनी उंचाइ जाणवी. (९१) प्रभु गर्भमां हता त्यारे माताए रात्रे पडखे थइने जता सर्पने जोयो तेथी तेम ज त्रैलोक्यने (पासे होय तेम) जोनारा होवाथी प्रभुनुं नाम पार्श्व स्थापन कर्युं. (९२) नेमिनाथना निर्वाणथी ८३६५० वर्ष व्यतीत थये श्रीपार्श्वनाथ प्रभु थया. (९३) ते वखते एटले पार्श्वप्रभु गर्भमां आव्या त्यारे चोथो आरो ३५० वर्ष बाकी रह्यो हतो. (९४) पार्श्वप्रभु त्रीश वर्ष कौमारावस्थामां रह्या अने ७० वर्ष श्रमणपणे रह्या. कुल १०० वर्षनुं आयु भोगव्युं. तेमां ८४ दिवसो छद्मस्थपणामां व्यतीत थया. व्रतावसरे शिबिका विशाळा नामनी हती. प्रभुए प्रथम पारणुं कोपकट ग्रामे धन्यने त्यां कर्युं. (९५-९६)

हवे कठ तापस पंचाग्निने साधतो घणुं कष्ट सहन करतो हतो. प्रभु संसारी-

सर्पे प्रज्ज्वलत्काष्ठकोटरात् ॥ ९७ ॥ लज्जितस्तपसा तेन मेघमाली सुरोऽभवत् । ववर्षातितरां रोषा–दुपद्रोतुं जिनेश्वरं ॥ ९८ ॥ धरणेंद्रत्वमासाद्य स सर्पो विचलासनः । भक्त्याच्छाद्य फणैरेन–मुपसर्गं न्यवर्त्तयत् ॥ ९९ ॥ ततस्त्रयोऽथवा सप्त फणा एकादशापि च । भवंति पार्श्वनाथस्ये–त्युक्तं पूर्वमहर्षिभिः ॥ १०० ॥

धातकी ज्ञानवृत्तः स्यात् श्रीपार्श्वस्य जगत्प्रभोः । प्रभोरष्टौ गणभृतो नामतः कीर्त्तयामि तान् ॥ १ ॥ शुभ १ स्तथार्यघोषश्च २ वशिष्ठो ३ ब्रह्मचार्यपि ४ । सोमश्च ५ श्रीधरश्चैव ६ वीरभद्रो ७ यशोऽभिधः ८ ॥ २ ॥ अयं श्रीकल्पसूत्रस्याभिप्रायः, आवश्यकसप्ततिशतस्थानकादिषु च दश गणभृत उक्ताः संति, किंच श्रीकल्पसूत्रपार्श्वचरित्रादौ श्रीपार्श्वस्य धातकी ज्ञानवृत्त उक्तः, श्रीउत्तराध्ययनवृहद्वृत्तौ तु अशोक उक्त इति ज्ञेयं.

षोडशैव सहस्राणि साधूनां भावितात्मनां । अष्टात्रिंशत्सहस्राणि साध्वीनां च शुभात्मनां ॥ ३ ॥ श्राद्धानां सचतुःषष्टि–सहस्रं

---

पणामां तेनी पासे गयेला ते वखते काष्ठना कोटरमां बळतो सर्प देखाड्यो तेथी ते तापस बहु लज्जा पाम्यो. ते मरण पामीने मेघमाली देव थयो. पार्श्वजिनेश्वरे दीक्षा लीधा पछी छद्मस्थावस्थामां ते मेघमाळीए अत्यंत रोषथी तीव्रधाराए वरसाद वरसावीने तेमने उपद्रव कर्यो. ( ९७–९८ ) अग्निमां बळतो सर्प मरण पामीने धरणेंद्र थयेलो ते आसन चलित थवाथी त्यां आव्यो. तेणे भक्तिवडे प्रभुने फणाथी आच्छादित करीने ते उपसर्गनुं निवारण कर्युं, ( ९९ ) तेथी त्रण, सात अथवा अग्यार फणा पार्श्वनाथनी मूर्त्ति उपर करवामां आवे छे एम पूर्व महर्षिओए कह्युं छे. ( १०० )

श्रीपार्श्व जगत्प्रभुनुं ज्ञानवृक्ष धातकी नामनुं हतुं. तेमने मुख्य आठ गणधर थया तेना नाम हुं कहुं छुं ( १ ) ते आ प्रमाणे—शुभ, आर्यघोष, वशिष्ठ, ब्रह्मचारी, सोम, श्रीधर, वीरभद्र अने यश. ( २ ) आ कल्पसूत्रनो अभिप्राय छे. श्रीआवश्यकसूत्र अने सप्ततिशतस्थानकादिमां तो दश गणधरो कह्या छे. वळी श्रीकल्पसूत्र ने पार्श्वचरित्रादिमां श्रीपार्श्वनाथनुं ज्ञानवृक्ष धातकी कह्युं छे, पण श्रीउत्तराध्ययन वृहद्वृत्तिमां अशोक कह्युं छे.

श्रीपार्श्वनाथना परिवारमां भावितात्मा एवा १६००० साधुओ, शुभात्मा एवी ३८००० साध्वीओ, ( ३ ) १६४००० श्रावको, तेमां प्रभुनो अग्रेसर श्रावक सूर्य नामनो

लक्ष्मीरितं । अग्रेसरः श्रावकश्च प्रभोः सूर्य इति स्मृतः ॥ ४ ॥ लक्षास्तिस्त्रस्तथैकोन–चत्वारिंशत्सहस्रकाः । श्राविकाणां तासु मुख्या सुनंदा नामतः स्मृता ॥ ५ ॥ सर्वज्ञानां सहस्रं च मनःपर्याय-वेदिनां । पंचाशदधिकाः सप्त शताः प्रोक्ता मनीषिभिः ॥ ६ ॥ अवधि-ज्ञानभाजां च चतुर्दश शताः प्रभोः । सच्चतुर्दशपूर्वाणा–मध्यर्द्धा त्रिशती मता ॥ ७ ॥ विकुर्वणासमर्थानां शतान्येकादशाथ च । सुरा-सुरैरजय्यानां षट्शती वादिनामभूत् ॥ ८ ॥ शुभाभिधो गणी मुख्य आर्यदिन्नो मतांतरे । प्रवर्त्तिनी पुष्पचूला भक्तभूपः प्रसेनजित् ॥ ९ ॥ बीजपूरोरगोपेता–पसव्यकरयामलः । नकुलं च भुजंगं च दधद्वामकर-द्वये ॥ १० ॥ श्यामवर्णः फणिफणा–चक्रमंडितमस्तकः । चतुर्भुजश्चतु-र्वक्त्रो गजास्यः कूर्मवाहनः ॥ ११ ॥ नाम्ना श्रीवामनो यक्षः पार्श्वा-ख्यश्च मतांतरे । श्रीपार्श्वनाथभक्तानां सान्निध्यं कुरुते सदा ॥ १२ ॥ आबिभ्रती पद्मपाशा–वपसव्ये करद्वये । सव्ये करद्वये कम्रौ दधती च फलांकुशौ ॥ १३ ॥ चतुर्भुजा हेमवर्णा कुर्कुटोरगवाहना । श्रीपार्श्वं स्मरतां दत्ते देवी पद्मावती श्रियं ॥ १४ ॥ इति श्रीपार्श्वः ॥

---

कहेलो छे. ( ४ ) ३३९००० श्राविका, तेमां मुख्य सुनंदा नामनी कही छे. ( ५ ) १००० केवळज्ञानी ने ७५० मनःपर्यवज्ञानी बुद्धिमानोए कहेला छे. ( ६ ) १४०० अव-धिज्ञानी, ३५० चौदपूर्वी, ( ७ ) ११०० वैक्रियविकुर्वणा करवाने समर्थ मुनिओ अने सुरासुरने पण अजय्य एवा ६०० वादी मुनिओ थया. ( ८ ) गणधरमां मुख्य शुभ नामे मतांतरे आर्यदिन्न नामे थया, प्रवर्त्तिनी पुष्पचूला अने भक्तराजा प्रसेनजित् थया. ( ९ ) श्रीपार्श्वनाथनो यक्ष वामन नामनो मतांतरे पार्श्व नामनो जमणा बे हाथमां बीज-पूर ने सर्प अने डाबा बे हाथमां नकुल ने भुजंगने धारण करनारो, श्याम वर्णवाळो, फणिना फणाओना समूहथी मंडित मस्तकवाळो, चार भुजावाळो, चार मुखवाळो, हाथी जेवा मुखवाळो अने कूर्मना वाहनवाळो थयो. ते श्रीपार्श्वनाथ प्रभुना भक्तोनी नित्य सान्निध्य करे छे. ( १०–१२ ) देवी पद्मावती नामनी जमणा बे हाथमां पद्म ने पाशने धारण करनारी अने डाबा बे हाथमां सुंदर एवा फळ ने अंकुशने धारण करनारी, चार भुजावाळी, सुवर्णसरखा वर्णवाळी, कुर्कुट जातिना सर्पना वाहनवाळी, श्रीपार्श्वनाथनुं स्मरण करनारने लक्ष्मी आपनारी थइ. ( १३–१४ ) इति श्रीपार्श्वः ॥

पश्चिमेषु विदेहेषु नयसाराभिधोऽभवत् । ग्रामनाथः स काष्ठार्थं वनेऽगात् स्वाम्यनुज्ञया ॥ १५ ॥ भोजनावसरे वांछ-न्नतिथीनां समागमं । सार्थभ्रष्टान् ददर्शर्षीन् क्षुधार्त्तान्मार्गविच्युतान् ॥ १६ ॥ ततस्तान् परमप्रीत्या प्रणम्य परिचर्य च । शुद्धाशनादिभिः पश्चा-त्स्वयं मार्गमदर्शयत् ॥ १७ ॥ प्रापितस्तत्र सम्यक्त्वं योग्योऽयमिति साधुभिः । ततो भवे द्वितीयेऽसौ सौधर्मे त्रिदशोऽभवत् ॥ १८ ॥ ततो मरीचिनामाभू-त्पुत्रो भरतचक्रिणः । स प्रवव्राज वैराग्या-त्समीपे वृषभप्रभोः ॥ १९ ॥ अधीतैकादशांगोऽपि सोऽथ तापादिपीडया । पीडितो भृशमुद्विग्न-श्चेतस्येवं व्यचिंतयत् ॥ २० ॥ मया न शक्यते वोढुं दुर्वहः संयमो न च । गेहेऽपि शक्यते गंतुं गर्हितेनावकीर्णिना ॥ २१ ॥ ततस्त्रिदंडिनामेष नव्यं वेषमकल्पयत् । विजहारार्हता सार्द्धं शुद्धं धर्मं प्ररूपयन् ॥ २२ ॥ अनेकान् राजपुत्रादीन् प्रतिबोध्येति शास्त्यसौ । जैनधर्मं प्रपद्यध्वं गत्वा श्रीजिनसन्निधौ ॥ २३ ॥

---

श्रीमहावीरजिनवर्णन— पश्चिम महाविदेहमां नयसार नामनो ग्रामाधिप हतो, ते पोताना स्वामीनी आज्ञाथी वनमां काष्टने माटे गयो. ( १५ ) भोजनावसरे अतिथिना समागमने इच्छता एवा तेणे सार्थभ्रष्ट ( साथथी छुटा पडी गयेला ) क्षुधार्त्त अने मार्ग भूलेला एवा मुनिओ दीठा. ( १६ ) एटले तेमने परम प्रीतिथी नमस्कार करीने शुद्ध अशनादि देवावडे परिचर्या करी अने पछी पोते साथे जइने मार्ग बताव्यो. ( १७ ) मुनिए आ योग्य जीव छे एम जाणीने उपदेशवडे तेने समकित प्राप्त कराव्युं. त्यांथी बीजे भवे ते सौधर्म देवलोके देव थयो. ( १८ ) त्यांथी च्यवीने त्रीजे भवे भरतचक्रीनो पुत्र मरीचि नामे थयो. तेणे वैराग्यथी वृषभ प्रभुनी पासे दीक्षा लीधी. ( १९ ) अग्यार अंग भण्या छतां तापादिकनी पीडाथी पीडित थयेल ते अत्यंत उद्विग्न थइने आ प्रमाणे चिंतववा लाग्यो ( २० ) के—' आ दुःखे वहन करवा योग्य संयमने वहन करवाने हुं समर्थ नथी, तेम ज व्रत भंग थवाथी गर्हित थयेला मारे घरे पण जइ शकाय तेम नथी. ' ( २१ ) आम विचारीने तेणे त्रिदंडीना नवा वेषनी कल्पना करी, अने शुद्ध धर्मने प्ररूपता सता प्रभुनी साथे विचरवा लाग्या. ( २२ ) अनेक राजपुत्रादिकने प्रतिबोध पमाडीने ते एम कहेता के—' श्रीजिनेश्वर पासे जइने जैन धर्मने अंगीकार करो. ' ( २३ )

कदाचित्समवासार्षी–दयोध्यायां जिनेश्वरः। तत्रागतो नमस्यार्थं पप्रच्छ भरतः प्रभुं ॥ २४ ॥ एतस्यामवसर्पिण्या–मस्मिंश्च भरते प्रभो !। भविष्यति जिनः कोऽपि जनोऽस्यां पर्षदि स्थितः ॥ २५ ॥ तदोचे भगवानेष मरीचिस्तनयस्तव। चतुर्विंशोऽत्र भाव्यर्हन् महावीराह्वयो नृप ॥ २६ ॥ चक्री च प्रियमित्राख्यो विदेहेषु भविष्यति। प्रथमो वासुदेवोऽपि भरतेऽत्रैव एव च ॥ २७ ॥ भरतोऽपि ततो गत्वे–त्यूचे नत्वा कृतांजलिः। जिनश्चक्री हरिर्भावी मरीचे भाग्यवानसि ॥ २८ ॥ पारिव्राज्यं न ते वंदे न च ते चक्रिशार्ङ्गिते। भविष्यसि जिनो हि त्वं प्रणमामि ततो मुदा ॥ २९ ॥ एवमुक्त्वा विनीतांत–र्विनीते नृपतौ गते। मरीचिर्मानसाविष्टा–ऽमानमानोऽब्रवीदिति ॥ ३० ॥ आद्योऽहं वासुदेवानां पिता मे चक्रवर्त्तिनां। पितामहो जिनेंद्राणां ममाहो उत्तमं कुलं ॥ ३१ ॥ प्रथमो वासुदेवोऽहं मूकायां चक्रवर्त्यहं। चरम-स्तीर्थराजोऽहं पर्याप्तमियतैव मे ॥ ३२ ॥ कुर्वन्नेवमहंकारं नीचैर्गोत्रं

---

अन्यदा श्रीजिनेश्वर अयोध्यामां समवसर्या. तेमने नमवा आवेला भरतचक्रीए प्रभुने पूछ्युं ( २४ ) के–' आपनी पर्षदामां एवो कोइ मनुष्य छे के जे आ अवसर्पिणीमां आ भरतमां तीर्थंकर थाय ? ' ( २५ ) भगवंते कह्युं के–'आ तारो पुत्र मरीचि हे नृप ! आ चोवीशीमां ज चोवीशमा महावीर नामे तीर्थंकर थशे. ( २६ ) वळी महाविदेहमां प्रियमित्र नामे चक्रवर्ती थशे अने आ भरतमां पहेला वासुदेव थशे.' ( २७ ) आ प्रमाणे सांभळीने भरतचक्रीए मरीचि पासे जइने अंजळी जोडी नमस्कार करीने कह्युं के– ' हे मरीचि ! तु तीर्थंकर, चक्री ने वासुदेव थइश तेथी तुं भाग्यवान छुं. ( २८ ) हुं तारा परिव्राजकपणाने के चक्री तथा वासुदेवपणाने नमस्कार करतो नथी परंतु तीर्थंकर थवानो छुं तेथी हुं हर्षवडे तने नमस्कार करुं छुं.' (२९) आ प्रमाणे कहीने विनीत अंतःकरणवाळा चक्री विनीतामां गये सते मनमां व्यापी गयुं छे अमान अभिमान जेने एवो मरीचि बोल्यो ( ३० ) के—' हुं वासुदेवमां पहेलो, मारा पिता चक्रवर्तीमां पहेला अने मारा पितामह जिनेश्वरमां पहेला तेथी अहो ! मारुं कुळ उत्तम छे. ( ३१ ) हुं पहेलो वासुदेव थइश, मूका नगरीमां चक्रवर्ती थइश ने छेल्लो तीर्थंकर थइश तेथी मने तमाम वस्तु प्राप्त छे. एटलाथी ज हुं खरेखरो उच छुं. ' ( ३२ ) आ प्रमाणे अहंकार

बबंध सः । जातिलाभकुलादीना-महंकारो हि पातयेत् ॥ ३३ ॥

कदाचित्कपिलं राज-कुमारं प्रत्यबूबुधत् । प्रैरयच्चापि चारित्रं ग्रहीतुं साधुसन्निधौ ॥ ३४ ॥ ततो बहुलकर्मायं मरीचिमवदद्विभो । किं सर्वथा न धर्मोऽस्ति भवदीयेऽत्र दर्शने ॥ ३५ ॥ ततो मरीचिरूचे तं भावितावद्भवस्थितिः । मार्गे ममापि धर्मोऽस्ति मार्गे जैनेऽपि विद्यते ॥ ३६ ॥ उत्सूत्रवचसानेन मरीचिः समुपार्जयत् । संसारमेकपाथोधि-कोटाकोटिमितं तदा ॥ ३७ ॥ ततस्तुर्ये भवे ब्रह्म-लोकस्वर्गेऽभवत्सुरः । कोल्लाकसन्निवेशेऽथ विप्रोऽभूत्पंचमे भवे ॥ ३८ ॥ ततश्च मृत्वा भूयांसं कालं संसारमाटिटत् । भवास्ते च न गण्यंते भवानां सप्तविंशतौ ॥ ३९ ॥ षष्ठे भवे च स्थूणायां नगर्यां ब्राह्मणोऽभवत् । सौधर्मकल्पे देवोऽभूद्भवे मृत्वा च सप्तमे ॥ ४० ॥ भवेऽष्टमे ततश्चैत्य-सन्निवेशेऽभवद् द्विजः । ईशानदेवलोकेऽथ निर्जरो नवमे भवे ॥ ४१ ॥ मंदराख्ये सन्निवेशे ब्राह्मणो दशमे भवे । एकादशे भवे देवो-ऽभवत्स्वर्गे तृतीयके ॥ ४२ ॥ भवे च द्वादशे पुर्यां श्वेताव्यां ब्राह्मणोऽभवत् ।

---

करवाथी तेमणे नीच गोत्र बांध्युं. जाति, लाभ अने कुळादिकनो मद ( अहंकार ) प्राणीने नीचा पाडी दे छे. ( ३३ )

अन्यदा मरीचिना उपदेशथी कपिल नामनो राजकुमार प्रतिबोध पाम्यो. मरीचिए साधुपासे जइने चारित्र लेवा प्रेरणा करी, (३४) परंतु बहुलकर्मी एवा तेणे मरीचिने कह्युं के—' हे विभो ! शुं तमारा दर्शनमां सर्वथा धर्म नथी ? ' (३५) त्यारे मरीचि तेटली भवस्थिति वधवानी होवाथी बोल्या के—'मारा मार्गमां पण धर्म छे अने जैनमार्गमां पण धर्म छे.' (३६) आ उत्सूत्र वचनथी मरीचिए एक कोटाकोटी सागरोपम संसार वधार्यो. (३७) त्यांथी मरण पामीने चोथे भवे ब्रह्म देवलोकमां देव थया. त्यारपछी पांचमे भवे कोल्लाक सन्निवेशमां विप्र थया. ( ३८ ) त्यांथी मरण पामीने घणो काळ संसारमां रखड्या. तेमां करेला पारावार भवो मुख्य २७ भवोमां गणत्रीमां आव्या नथी. ( ३९ ) छठ्ठा भवे स्थूणानगरीमां ब्राह्मण थया. मरण पामीने सातमे भवे सौधर्मकल्पमां देव थया. ( ४० ) आठमा भवमां चैत्यसन्निवेशमां ब्राह्मण थया. नवमा भवे ईशान देवलोकमां देव थया. ( ४१ ) दशमे भवे मंदर नामना सन्निवेशमां ब्राह्मण थया. अग्यारमे भवे त्रीजा स्वर्गमां देव थया. ( ४२ ) बारमे भवे श्वेतांबीमां ब्राह्मण थया. तेरमे भवे चोथा देवलोकमां देव

त्रयोदशे च माहेंद्रे कल्पेऽभूत्रिदशो भवे ॥ ४३ ॥ ततः कियंतं कालं च भ्रांतोऽसौ भवसागरे। चतुर्दशे ततो राज–गृहेऽभूद्ब्राह्मणो भवे ॥४४॥ भवे पंचदशे ब्रह्म–लोकस्वर्गे सुरोऽभवत् । मरीच्यादिनृभवानां षट्के सोऽभूत्रिदंडिकः॥४५॥ षोडशे च भवे विश्व–भूत्याख्यो युवराजसूः। संभूतिमुनिपादांते पप्रेदे संयमं स च ॥ ४६ ॥ अन्यदा मासतपसः पारणायां स जग्मिवान् । मुनिर्गोचरचर्यायां तत्र धेनुहतोऽपतत् ॥४७॥ दृष्टः पितृव्यपुत्रेण हसितः कुपितो भृशं । गां शृंगयोर्गृहीत्वा द्राग् नभस्यभ्रमयद्रुषा ॥ ४८ ॥ निदानं कृतवांश्चैवं भूयासं तपसामुना । भूयिष्ठवीर्यो मृत्वा च महाशुक्रेऽभवत्सुरः ॥ ४९ ॥ वासुदेवस्त्रिपृष्ठाख्यो–ऽजायताष्टादशे भवे । बाल्येऽप्यदारयत्सिंहं यः स्थाम्ना जीर्णवस्त्रवत् ॥ ५० ॥ नरके सप्तमेऽथैको–नविंशतितमे भवे । सिंहोऽभूद्विंशतितमे चतुर्थे नरके गतः ॥ ५१ ॥ निर्गत्य नरकात्तुर्यात् स बभ्राम भवान् बहून् । द्वाविंशेऽथ भवे नृत्वं प्राप्य पुण्यान्युपार्जयत् ॥ ५२ ॥ भवे ततस्त्रयोविंशे । प्रियमि-

---

थया. ( ४३ ) त्यारपछी पाछा केटलोक काळ संसारसागरमां भम्या. चौदमे भवे राजगृहमां ब्राह्मण थया. ( ४४ ) पंदरमे भवे पांचमा ब्रह्मदेवलोकमां देव थया. मरीचि विगेरे छ मनुष्य भवोमां ते त्रिदंडी थया हता. ( ४५ ) सोळमे भवे विश्वभूति नामे युवराज थया. तेमणे संभूतिमुनिनी पासे दीक्षा लीधी. ( ४६ ) अन्यदा मासखमणने पारणे विश्वभूति मुनि गोचरचर्या माटे शहेरमां गया. त्यां एक गायना धपडावाथी मुनि पडी गया. ( ४७ ) ते जोइने तेना काकानो पुत्र विशाखनंदी हस्यो. ते जोइ मुनिने घणो कोप उत्पन्न थयो. तेणे गायने शींगडावडे पकडी क्रोधथी आकाशमां फेरवी फेंकी दीधी ( ४८ ) अने नियाणुं कर्युं के—' मारा आ घणा तपना प्रभावथी हुं घणी शक्तिवाळो थाउं. ' सत्तरमे भवे महाशुक्र नामना सातमा देवलोकमां देव थया. (४९) अढारमे भवे त्रिपृष्ठ नामे वासुदेव थया. बाल्यावस्थामां ज तेणे सिंहने पोताना बळवडे जीर्ण वस्त्रनी जेम फाडी नाख्यो. ( ५० ) ओगणीशमे भवे सातमी नरकमां नारकी थया. वीशमे भवे सिंह थया. २१ मे भवे चोथी नरके नारकी थया. ( ५१ ) चोथी नरकमांथी नीकळीने ते ( त्रीजी वार ) घणा भवमां भम्या. २२ मा भवे मनुष्यपणुं पामीने पुण्य उपार्जन कर्युं, ( ५२ ) तेथी २३ मे भवे प्रियमित्र नामे चक्रवर्ती थया. ते चक्री चारित्र

त्राभिधोऽभवत् । चक्रभृत्स च चारित्रं धृत्वा शुक्रेऽभवत्सुरः ॥ ५३ ॥ ततश्च्युत्वेह भरत–क्षेत्रेऽहिच्छत्रिकापुरे । जितशत्रुमहीपाल–भद्रादेव्योः सुतोऽभवत् ॥ ५४ ॥ पंचविंशतिलक्षाब्द–जीवितो नंदनाह्वयः । दीक्षां लक्षाब्दशेषायु–राददे पोट्टिलाद्गुरोः ॥ ५५ ॥ अयमावश्यकाभिप्रायः, समवायांगसूत्रवृत्त्योस्तु भगवान् पोट्टिलाभिधानो राजपुत्रो बभूव, तत्र वर्षकोटिं प्रव्रज्यां पालितवान्, ततो नंदनाभिधानो राजसूरित्युक्तमस्तीति ज्ञेयं. यावज्जीवं ततो मास–क्षपणानि निरंतरं । कुर्वन् स विंशतिस्थाना–न्याराध्यार्हत्यमार्जयत् ॥ ५६ ॥ सुरोऽभूत्प्राणतस्वर्गे षड्विंशतितमे भवे । विंशत्यब्ध्यायुर्विमाने पुष्पोत्तरावतंसके ॥ ५७ ॥

भवे ततः सप्तविंशे ग्रामे ब्राह्मणकुंडके । विप्रस्यर्षभदत्तस्य देवानंदाह्वयस्त्रियां ॥ ५८ ॥ मरीचिभवबद्धेन स नीचैर्गोत्रकर्मणा । कुक्षौ प्रभुक्तशेषेण विश्वेशोऽप्युदपद्यत ॥ ५९ ॥ अर्हंतश्चक्रिणश्चैव सीरिणः शार्ङ्गिणोऽपि च । तुच्छान्वयेषूत्पद्यंते कदाचित्कर्मदोषतः ॥ ६० ॥ जायंते तु कदाप्येते तादृग्वंशेषु नोत्तमाः । इति दत्तोपयोगस्य सुरेंद्रस्यानु-

---

लइने २४ मे भवे महाशुक्र ( ७ मा ) देवलोकमां देव थया. ( ५३ ) त्यांथी च्यवीने २५ मे भवे आ भरतक्षेत्रमां अहिछत्रिका नगरीमां जितशत्रु राजा ने भद्रादेवीना पुत्र थया. ( ५४ ) त्यां तेनुं नंदन नाम पाड्युं, तेमनुं २५ लाख वर्षनुं आयुष्य हतुं. एक लाख वर्ष बाकी रह्या त्यारे पोट्टिल नामना गुरुपासे चारित्र लीधुं. (५५) आ आवश्यकसूत्रनो अभिप्राय छे. समवायांगसूत्र ने तेनी वृत्तिमां तो भगवान पोट्टिल नामना राजपुत्र थया. त्यां एक कोटि वर्ष प्रव्रज्या पाळी आनते देव थया. त्यारपछी नंदन नामे राजपुत्र थया एम कह्युं छे. नंदन मुनिए यावज्जीव निरंतर मासखमण कर्या अने वीशस्थानक आराधवावडे अरिहंत नामकर्म उपार्जन कर्युं. ( ५६ ) छवीशमे भवे प्राणत नामना दशमा देवलोके वीश सागरोपमना आयुवाळा पुष्पोत्तरावतंसक विमानमां देव थया. (५७)

त्यारपछी २७ मे भवे ब्राह्मणकुंडग्रामे ऋषभदत्त ब्राह्मणनी देवानंदा नामनी स्त्रीनी कुक्षिमां मरीचिना भवमां बांधेल नीचगोत्रकर्म भोगवतां शेष रहेलुं तेना कारणथी विश्वेश ( तीर्थंकर ) थवाना छतां उत्पन्न थया. ( ५८–५९ ) अरिहंत, चक्री, वासुदेव, बळदेव कदाचित कर्मना दोषथी ब्राह्मणादि तुच्छ कुळमां उपजे, ( ६० ) परंतु उत्तमपुरुषो तेवा वंशमां जन्मे तो नहीं ज. आ प्रमाणे उपयोग देवाथी शक्रेंद्रे जाण्युं तेथी

शासनात् ॥ ६१ ॥ पुरे चत्रियकुंडाख्ये सिद्धार्थस्य महीपतेः । त्रिशलाया महाराज्ञ्याः कुक्षावक्षीणसंपदः ॥ ६२ ॥ मुक्त्वा द्व्यशीत्यहोरात्रातिक्रमे नैगमेषिणा । अजायत सुतत्वेन चतुर्विंशो जिनेश्वरः ॥ ६३ ॥

एवं च—उसह १ ससि २ संति ३ सुव्वय ४ । नेमीसर ५ पास ६ वीर ७ सेसाणं ८ ॥ तेर १ सग २ बार ३ नव ४ नव ५ । दस ६ सगवीसा य ७ तिन्नि ८ भवा ॥ ६४ ॥ इति समर्थितं । श्रीसमवायांगे कोटिसमवाये 'तित्थकरभवग्गहणातो छट्ठे पोट्टिलभवग्गहणे' इति सूत्रे श्रीवीरस्य देवानंदागर्भस्थितित्रिशलाकुक्ष्यागतिश्चेति भवद्वयं विवक्षितमस्तीति ज्ञेयं.

---

तेमणे आज्ञा करवाथी नैगमेषीदेवे अहीं आवीने क्षत्रियकुंड ग्राममां सिद्धार्थ राजानी अक्षीण संपदावाळी त्रिशला महाराणीनी कुक्षिमां प्रभुने ब्याशी रात्री अतिक्रम्या पछी मूक्या अने त्यां चोवीशमा तीर्थंकर पुत्रपणे जन्म्या. ( ६१–६३ )

समकित पाम्या पछीना भवोनी गणत्रीने अंगे कह्युं छे के—' ऋषभदेव, चंद्रप्रभु, शांतिनाथ, मुनिसुव्रत, नेमीश्वर, पार्श्व, वीर अने बाकीना १७ प्रभुना अनुक्रमे तेर–सात–बार–नव–नव–दश–सत्तावीश अने त्रण–त्रण भव जाणवा. ' (६४) श्रीसमवायांगे कोटिसमवाये —" तीर्थंकरना भवग्रहणथी ( पाछला ) छट्ठा पोट्टिलना भवग्रहणमां–एम कहेवावडे आ सूत्रमां श्रीवीरप्रभुना देवानंदागर्भस्थिति अने त्रिशलानी कुक्षिमां आगति एम बे भवनी जूदी विवक्षा करी छे एम जाणवुं. "

( श्रीसमवायांगसूत्रनी छापेली टीकामां पृष्ठ १०१/९ मां कह्युं छे के—भगवान पोट्टिल नामना राजपुत्र थया. त्यां एक क्रोड वर्ष प्रव्रज्या पाळी ते एक भव, त्यांथी देव थया ते बीजो भव, त्यांथी छत्राग्रनगरीमां नंदन नामे राजपुत्र थया ते त्रीजो भव, त्यांथी एक लाख वर्ष सर्वदा मासक्षपणवडे तप तपीने दशमा देवलोके पुष्पोत्तरवरविजयपुंडरीक नामना विमानमां देव थया ते चोथो भव. त्यांथी ब्राह्मणकुंड ग्राममां ऋषभदत्त ब्राह्मणनी भार्या देवानंदानी कुक्षिमां उत्पन्न थया ते पांचमो भव. त्यांथी ब्याशीमे दिवसे क्षत्रियकुंडग्रामनगरे सिद्धार्थ महाराजानी त्रिशला नामनी राणीनी कुक्षिमां इंद्रना आज्ञाकारी हरिनैगमेषि नामना देवे संहर्या ने तीर्थंकरपणे जन्म्या ते छट्ठो भव. ए रीते भव ग्रहण कर्या विना बीजी कोइ रीते भगवंतनुं छट्ठा भवग्रहणपणुं व्याख्यामां जाणवामां आव्युं नथी. आ रीते ज छट्ठा भवग्रहणपणुं कहेलुं छे. जे भवना ग्रहणथी आ छट्ठो भव ते भव मानाथी पाछळ गणतां छट्ठो ज थाय, तेथी तीर्थंकरना भवग्रहणथी पाछले छट्ठे पोट्टिलना भवे क्रोड वर्ष चारित्र पाळ्युं एम कहेवुं ते मळतुं आवे छे. )

आषाढे धवला षष्ठी चैत्रे शुक्ला त्रयोदशी । मार्गस्य दशमी कृष्णा वैशाखे दशमी सिता ॥ ६५ ॥ कार्त्तिकस्यामावसीति कल्याणकदिनाः प्रभोः । अभूद्गर्भापहारे तु त्रयोदश्याश्विने सितिः ॥ ६६ ॥ फाल्गुन्य उत्तरा धिष्ण्यं कल्याणकचतुष्टये । तथा गर्भापहारेऽपि निर्वाणे स्वातिरिष्यते ॥ ६७ ॥ द्वयोर्महिलयोर्गर्भे स्थितिः संकलिता विभोः । नव मासाः सातिरेकाः सप्तभिः किल वासरैः ॥ ६८ ॥ श्रीपार्श्वनाथनिर्वाणा-दभूज्जन्मांतिमार्हतः । साधिकेनाष्टसप्तत्या शतेन शरदामिह ॥ ६९ ॥ श्रीवीरगर्भकाले च वर्षाणां पञ्चसप्ततिः तुर्यारकेऽवशिष्टाऽऽसीत् सार्धमासाष्टकाधिका ॥ ७० ॥ राशिरासीद्विभोः कन्या लांछनं च मृगाधिपः । देहोच्छ्रयः सप्त हस्ताः प्रशस्तांगद्युतिश्रियः ॥ ७१ ॥ गुणागतानि नामानि त्रीण्यभूवन् जगद्विभोः । वर्द्धमानः श्रमणश्च महावीर इति स्फुटं ॥ ७२ ॥ अवतीर्णे प्रभौ ग्राम-राष्ट्रादि यदवर्द्धत । ततः पितृभ्यां विहित-मादिमं नाम सार्थकं ॥ ७३ ॥ तपस्यति श्राम्यतीति नाम श्रमण

---

अषाढ शुदि ६, चैत्र शुदि १३, मार्गशीर्ष वदि १०, वैशाख शुदि १० अने कार्त्तिक वदि ०)) ए पांच कल्याणकना दिवसो जाणवा. प्रभुनो गर्भापहार आसो वदि १३ शे जाणवो. चार कल्याणकमां उत्तराफाल्गुनी नक्षत्र जाणवुं. गर्भापहारमां पण ते नक्षत्र जाणवुं अने निर्वाणमां स्वाति नक्षत्र जाणवुं. ( ६५–६७ ) प्रभुनी बंने महिलाना गर्भनी मळीने एकत्रित स्थिति सात दिवसे करीने अधिक नव मासनी जाणवी. ( ६८ ) श्रीपार्श्वनाथना निर्वाणथी कांइक अधिक १७८ वर्षे वीरप्रभुनो जन्म जाणवो. ( ६९ ) श्रीवीरप्रभुना गर्भकाळे चोथो आरो ७५ वर्ष ने ८॥ मास बाकीमां हतो.[1] (७०) प्रभुनी राशि कन्या अने लंछन सिंहनुं जाणवुं. देहनी उंचाइ सात हाथनी अने प्रशस्त एवी अंगनी द्युति ( कांति ) तेम ज शोभा हती. ( ७१ ) गुणथी प्राप्त थयेला प्रभुना त्रण नाम हता. वर्धमान, श्रमण ने महावीर. ( ७२ ) प्रभु गर्भमां आव्या त्यारथी सिद्धार्थराजा ग्रामराष्ट्रादिथी वृद्धि पाम्या तेथी मातापिताए सार्थक एवुं पहेलुं वर्धमान नाम पाडयुं. ( ७३ ) तपस्या करवाथी, श्रम करवाथी श्रमण एवुं बीजुं सार्थक नाम

---

१ कुल २९३ वर्षे ने ८॥ मासमां प्रभु २९० वर्षे निर्वाण पामतां ३ वर्ष ने ८॥ मास चोथो आरो बाकी रहेशे.

इत्यभूत् । तृतीयं नाम शक्रेण विहितं तन्निशम्यतां ॥ ७४ ॥
प्रशशंसान्यदा शक्रः स्वामिधैर्यं स्वपर्षदि । अश्रद्दधानस्तत्कश्चि-द्देवो भूलोकमीयिवान् ॥ ७५ ॥ क्रीडति स्वामिनि क्रूर-सर्परूपमदी-दृशत् । निक्षिप्ते स्वामिना दूरं तस्मिन्निर्भीकचेतसा ॥ ७६ ॥ कुमार-रूपमाधाय चिक्रीड प्रभुणा सह । छलेन स्कंधमारोप्य प्रभुं स ववृधे भृशं ॥ ७७ ॥ तथाप्यभीतो भगवान् शनैर्मुष्ट्या जघान तं । ततः शक्रो व्यधात्तुष्टो महावीराभिधं विभुं ॥ ७८ ॥ तथोक्तं—बालत्तणे वि सूरो पयइए गुरुपरक्कमो भयवं । वीरत्ति कयं नामं सक्केणं तुट्ठचित्तेणं । ७९ ॥ श्रीयोगशास्त्रगच्छाचारवृत्त्यादौ तु यदा प्रभुणा जन्मोत्सवे मेरुः कंपितस्तदा शक्रेणैतन्नाम कृतमित्यस्तीति ज्ञेयं. पूर्ववैरिसंगमसुरो-पहितकालचक्राप्रधृष्यत्वादिंद्रादयो वीरनामानमुच्चैरुच्चेरुरिति ; तत्त्वार्थवृ०
स्वामी कनकवर्णांग—स्तथा पंचदशापरे । पद्मप्रभवासुपूज्यौ

---

थयुं. त्रीजुं महावीर नाम शक्रे पाडयुं तेनी हकीकत सांभळो–( ७४ )

अन्यदा शक्रेंद्रे पोतानी पर्षदामां स्वामीना धैर्यनी प्रशंसा करी. तेने नहीं सद्दहीने एक देव पृथ्वीपर आव्यो. ( ७५ ) तेणे क्रीडा करता एवा स्वामीनी पासे क्रूर सर्पनुं रूप देखाडयुं. एटले तेनाथी नहीं बीता चित्तवाळा प्रभुए तेने दूर फेंकी दीधो. ( ७६ ) एटले ते देव कुमारनुं रूप करीने प्रभुनी साथे रमवा आव्यो अने छळथी प्रभुने पोताना स्कंधपर चडावीने घणो ज वधवा लाग्यो; ( ७७ ) तथापि अभीत ( नहीं भय पामेला ) एवा भगवाने धीमेथी तेनापर मुष्टिवडे प्रहार कर्यो. ( एटले देव संकोच पामी, अपराध खमावी स्वस्थानके गयो ). आ हकीकतथी संतुष्ट थयेला इंद्रे प्रभुनुं महावीर एवुं नाम स्थापन कर्युं. ( ७८ ) कह्युं छे के—' बाळकपणामां पण शूर अने स्वभावे ज अति पराक्रमवाळा भगवाननुं वीर एवुं नाम तुष्टमान थयेला शक्रे स्थापन कर्युं. ( ७९ ) श्रीयोगशास्त्र ने गच्छाचारनी वृत्ति विगेरेमां तो ज्यारे प्रभुए जन्मोत्सव समये मेरुने कंपाव्यो त्यारे शक्रेंद्रे महावीर नाम स्थापन कर्युं एम कहेलुं छे तथा श्रीतत्त्वार्थनी वृत्तिमां ' पूर्ववैरी संगमसुरे करेला काळचक्रथी पण प्रभु डग्या नहीं त्यारे इंद्रादिक वीर नामथी उंचे स्वरे बोलवा हवा ' एम कह्युं छे.

वीरप्रभुनो कनकसमान वर्ण हतो तेम ज बीजा १५ प्रभुनो पण तेवो वर्ण हतो,

पद्मरागारुणद्युती ॥ ८० ॥ नीलवर्णौ मल्लिपार्श्वा–वुज्ज्वलौ नवमाष्टमौ । सजलांभोधरश्यामौ श्रीनेमिमुनिसुव्रतौ ॥ ८१ ॥

अनंगीकृतसाम्राज्यो गृहवासेऽवसद्विभुः । त्रिंशद्वर्षाणि चारित्रं ततश्च प्रत्यपद्यत ॥ ८२ ॥ षड्भिर्मासैः किलाभ्यर्द्धैः शरदो द्वादशाधिकाः । छद्मस्थता प्रभोस्तत्र यत्तपोऽभूत्तदुच्यते ॥ ८३ ॥ द्वे षण्मासक्षपणके तत्रैकं पंचभिर्दिनैः । न्यूनं नव चतुर्मास–क्षपणान्यकरोद्विभुः ॥ ८४ ॥ सार्द्धद्विमासक्षपणे त्रिमासक्षपणे अपि । द्वे द्वे द्विमासक्षपणा–न्यकार्षीत् षड् जिनेश्वरः ॥ ८५ ॥ सार्द्धैकमासक्षपणे द्वे मासक्षपणानि च । द्वादश द्वासप्ततिश्च पक्षक्षपणकान्यथ ॥ ८६ ॥ द्विघस्त्रा भद्रप्रतिमा महाभद्रा चतुर्दिना । प्रतिमा सर्वतोभद्रा दशभिर्दिवसैर्मिता ॥ ८७ ॥ एकोनत्रिंशदधिकं षष्ठभक्तशतद्वयं । त्रिशत्येकोनपंचाशा पारणानां समुच्चिता ॥ ८८ ॥ अष्टमानि द्वादशैकं प्रव्रज्यादिनमित्यसौ । सर्वसंकलने छद्मस्थताद्धा स्यात्पुरोदिता ॥ ८९ ॥ सर्वं चतुर्विधाहारं स्वामिनेदं तपः कृतं । द्वित्राण्यपि दिनानीह न च भुक्तं निरंतरं ॥ ९० ॥

---

पद्मप्रभ ने वासुपूज्यनी पद्मरागमणिनी जेवी रक्त कांति हती, ( ८० ) मल्लिनाथ ने पार्श्वनाथ नील वर्णना हता, नवमा ने आठमा ( सुविधिनाथ ने चंद्रप्रभ ) उज्वळ वर्णना हता अने जळसहित अंभोधर ( मेघ ) समान श्याम वर्णवाळा श्रीनेमिनाथ ने मुनिसुव्रतस्वामी हता. ( ८१ )

साम्राज्यने अंगीकार कर्या सिवाय त्रीश वर्ष प्रभु गृहवासमां रह्या. त्यारपछी चारित्र ग्रहण कर्युं. ( ८२ ) बार वर्ष ने साडाछ मास प्रभुनुं छद्मस्थपणुं रह्युं. तेमां प्रभुए जे तप कर्यो ते कहे छेः—( ८३ ) बे छमासी–तेमां एक पांच दिवस ऊणो अने नव चउमासी तप प्रभुए कर्या. ( ८४ ) अढीमासी, त्रणमासी बबे ने बे मासखमण छ जिनेश्वरे कर्या. ( ८५ ) दोढमासी बे, मासखमण बार ने पाक्षिक तप ७२ कर्या. ( ८६ ) बे दिवसनी भद्र प्रतिमा, चार दिवसनी महाभद्र प्रतिमा ने दश दिवसनी सर्वतोभद्र प्रतिमा प्रभुए आराधी. ( ८७ ) २२९ छठ, बार अठ्ठम, एक प्रव्रज्यानो दिवस ने ३४९ कुल पारणाना दिवस–आ बधानी संकळना करवाथी पूर्वे कह्या प्रमाणे छद्मस्थपणानो काळ पूर्ण थाय छे. ( ८८–८९ ) आ तप चउविहारवडे स्वामीए कर्यो छे अर्थात् तपमां पाणी वापर्युं नथी अने निरंतर एटले उपराउपरी बे के त्रण दिवस पण आहार लीधो नथी. (९०)

नाप्रीतिमद्गृहे वासः १ स्थेयं प्रतिमया सदा २। न गेहिविनयः कार्यो ३ मौनं ४ पाणौ च भोजनं ५ ॥ ९१ ॥ अभिग्रहानिमान्पंचा–भिगृह्य परमेश्वरः। आर्यानार्येषु देशेषु विजहार क्षमानिधिः ॥ ९२ ॥ एवं विजहृर्वृषभ–नेमिपार्श्वजिनेश्वराः। आर्यानार्येषु शेषास्तु सदार्येष्वेव विंशतिः ॥ ९३ ॥ एकोनत्रिंशतं वर्षाण्यध्यर्द्धान्यंतिमो जिनः। पक्षोनानि च सर्वज्ञ–पर्यायं पर्यपूरयत् ॥ ९४ ॥ बभार व्रतपर्यायं द्विचत्वारिंशदब्दकं। एवं द्विसप्ततिर्वर्षा–ण्यायुः सर्वमभूद्विभोः ॥ ९५ ॥ अयं कल्पसूत्राद्यभिप्रायः, समवायांगे तु साधिकानि द्विचत्वारिंशद्वर्षाणि व्रतपर्यायः, साधिकानि द्विसप्ततिवर्षाणि सर्वायुरित्युक्तमिति ज्ञेयं. तपो वृषभतीर्थेऽभू–दुत्कृष्टं वार्षिकं तथा। षाण्मासिकं वीरतीर्थे शेषेषु चाष्टमासिकं ॥ ९६ ॥ प्रमादकालोऽहोरात्र—प्रमितो वृषभेशितुः। अंतर्मुहूर्त्तं वीरस्य शेषाणां स न विद्यते ॥ ९७ ॥ श्रीवीरनेतुर्भूयांसः श्रीपार्श्वस्य च तेऽल्पकाः। द्वाविंशतेश्च शेषाणा–मुपसर्गा न जज्ञिरे ॥ ९८ ॥ शक्रन्यस्तं देवदूष्यं स्कंधे वृषभवीरयोः। संवत्सरं सातिरेकं

---

अप्रीतिवाळे स्थळे वास न करवो १, निरंतर काउसग्गध्याने उभा रहेवुं २, गृहस्थनो विनय न करवो ३, मौनपणे रहेवुं ४ अने हाथमां लइने ज भोजन करवुं ५ (९१) आ पांच अभिग्रह करीने क्षमानिधि एवा प्रभुए आर्य ने अनार्य देशोमां विहार कर्यो. (९२) ए रीते वृषभदेव, नेमिनाथ ने पार्श्वजिनेश्वरे पण आर्य अने अनार्य देशोमां विहार कर्यो छे. बाकीना वीश प्रभु आर्यदेशमां ज विचर्या छे. (९३) २९ वर्ष ने ५॥ मास प्रभुए सर्वज्ञपर्यायवडे परिपूर्ण कर्या छे. (९४) एकंदर व्रतपर्याय ४२ वर्षनो थवाथी कुल ७२ वर्षनुं आयु वीरप्रभुनुं पूर्ण थयुं छे. (९५) आ कल्पसूत्रादिनो अभिप्राय छे. समवायांगमां तो साधिक ४२ वर्ष व्रतपर्याय ने साधिक ७२ वर्षनुं सर्वायु कहेलु छे. ऋषभ प्रभुना तीर्थमां उत्कृष्ट वार्षिक तप, वीरप्रभुना तीर्थमां छमासी तप ने बाकीना २२ प्रभुना तीर्थमां अष्टमासी तप करवामां आवतो हतो. (९६)

प्रमादकाळ ऋषभप्रभुनो एक अहोरात्र, वीरप्रभुनो अंतर्मुहूर्त्त अने बावीश प्रभुनो बिलकुल नहीं. (९७) श्री वीरप्रभुने घणा अने पार्श्वप्रभुने अल्प थया छे ने बावीश प्रभुने बिलकुल उपसर्गो थया ज नथी. (९८) शक्रे स्थापेलुं देवदूष्य ऋषभदेव तथा वीरप्रभुने

शेषाणां सर्वदा स्थितं ॥ ९९ ॥ अत्र श्रीजंबूद्वीपप्रज्ञप्तिसूत्रे श्रीवृषभदेवस्य श्रीकल्पसूत्रे श्रीमहावीरस्य साधिकं वर्षं देवदूष्यस्थितिरुक्ता, श्रीसप्ततिशतस्थानकग्रंथे च—सक्को य लक्खमुल्लं सुरदूसं ठवइ सव्वजिणखंधे । वीरस्स वरिसमहियं सयावि सेसाण तस्स ठिई ॥ १ ॥ इत्युक्तमिति ज्ञेयं.

चंद्रप्रभाख्या शिबिका बहुलो भैक्ष्यमादिमं । कोल्लाकसन्निवेशेऽदात् सालो ज्ञानतरुः प्रभोः ॥ १००० ॥ अष्टाद्यास्तद्भवे सिद्धा अर्हत्प्रथमभैक्ष्यदाः । शेषास्तृतीये सेत्स्यंति सिद्धाः केऽपि च तद्भवे ॥१॥ वासुपूज्यमल्लिनेमि—पार्श्ववीरजिनेश्वराः । प्रवव्रजुर्वयस्याद्ये—ऽनुपात्तराज्यसंपदः ॥ २ ॥ प्रवव्रजुर्भुक्तराज्याः शेषा वयसि पश्चिमे । मंडलेशाः परे तेषु चक्रिणः शांतिकुंथ्वराः ॥ ३ ॥ अभोगफलकर्माणौ मल्लिनेमिजिनेश्वरौ । निरीयतुरनुद्वाहौ कृतोद्वाहाः परे जिनाः ॥ ४ ॥ सार्वभौमोऽभवत्पूर्वं श्रीनाभेयजिनेश्वरः । इतो भवे तृतीयेऽन्ये जिनाः सर्वेऽपि पार्थिवाः

---

सातिरेक संवत्सर सुधी अने शेष तीर्थंकरोने सर्वदा रहेलुं छे. ( ९९ ) श्री जंबूद्वीपप्रज्ञप्तिसूत्रमां श्रीऋषभदेवने अने श्रीकल्पसूत्रमां श्रीमहावीरने साधिक वर्ष देवदूष्यनी स्थिति कही छे. श्री सप्ततिशतस्थानक ग्रंथमां तो–'शक्र लाखमूल्यनुं देवदूष्य सर्व प्रभुना स्कंधपर स्थापन करे छे, ते वीरप्रभुने एक वर्ष झाझेरुं रह्युं छे अने बीजा सर्व प्रभुने कायम रह्युं छे.' एम कहेल छे.

दीक्षावसरे शिबिका चंद्रप्रभा नामनी अने प्रथम पारणुं कोल्लाकसन्निवेशमां बहुले कराव्युं. ज्ञानवृक्ष साल नामनुं जाणवुं. ( १००० ) प्रभुने प्रथम भिक्षा आपनारमां प्रथमना आठ तद्भवे सिद्ध थया छे बाकीना १६ प्रभुने पारणुं करावनार केटलाक तद्भवे ने केटलाक त्रीजे भवे सिद्ध थया छे. ( १ ) वासुपूज्य, मल्लिनाथ, नेमिनाथ, पार्श्वनाथ ने वीरप्रभु—ए पांच तीर्थंकरोए राज्यसंपदा स्वीकार्या सिवाय प्रथमावस्थामां ज प्रव्रज्या ग्रहण करी छे. ( २ ) बाकीना १९ प्रभुए राज्य भोगवीने पश्चिम वयमां प्रव्रज्या ग्रहण करी छे. तेमां पण १६ मंडलिक राजा हता अने शांति, कुंथु ने अर ए त्रण चक्रवर्ती थया हता. ( ३ ) जेमने भोगफळकर्म नहोतुं एवा मल्लिनाथ ने नेमिनाथे विवाह कर्या विना चारित्र लीधुं अने बाकीना २२ प्रभुए विवाह कर्या पछी लीधेल छे. ( ४ )

॥ ५ ॥ श्रीपार्श्वोऽपि तच्चरित्रानुसारेण चक्र्यासीदिति दृश्यते.

सुमतिर्नित्यभक्तेन मल्लिपार्श्वौ कृताष्टमौ । चतुर्थेन द्वादशान्ये कृतषष्ठाः प्रवव्रजुः ॥ ६ ॥ वासुपूज्यः शतैः षड्भि–र्मल्लिपार्श्वौ त्रिभिः शतैः । एको वीरः सहस्रैश्च चतुर्भिर्वृषभो नृणां ॥ ७ ॥ व्रतं भेजुः सहस्रेण सह शेषा वृषध्वजः । विनीतायां द्वारिकायां नेमिर्जन्मपुरेऽपरे ॥ ८ ॥ सिद्धार्थवन उद्याने प्राव्राजीद्वृषभः प्रभुः । वने विहारगेहाख्ये वासुपूज्यो जिनेश्वरः ॥ ९ ॥ श्रीधर्मो वप्रकाभिख्ये विंशो नीलगुहाह्वये । श्रीपार्श्व आश्रमपदे ज्ञातखंडेंतिमो जिनः ॥ १० ॥ सहस्राम्रवणे शेषा–श्चतुर्भिर्मुष्टिभिस्तथा । नाभेयः कृतवान् लोचं मुष्टिभिः पंचभिः परे ॥ ११ ॥ मल्लिश्रेयांससुमति–नेमिपार्श्वजिनेश्वराः । पूर्वाह्णे जगृहु–र्दीक्षां पश्चिमाह्ने परे जिनाः ॥ १२ ॥ आद्येनाद्यपारणायां लब्धोऽब्दे–नैक्षवो रसः । परमान्नं द्वितीयेऽह्नि लेभे सर्वैः परैर्जिनैः ॥ १३ ॥ बाल्ये सुधाभुजः सर्वे शुद्धाहाराशिनो व्रते । आद्यः कल्पद्रुफलभुग्–

---

श्री नाभेय जिनेश्वर ( ऋषभदेव ) पाछला त्रीजे भवे चक्रवर्ती हता; बीजा बधा सामान्य राजाओ हता. ( ५ ) ' श्री पार्श्व प्रभु तेना चरित्र अनुसारे पाछले त्रीजे भवे चक्री हता.'

सुमतिनाथे नित्यभक्तपणे, मल्लिनाथ ने पार्श्वनाथे अट्ठम करीने, बार प्रभुए चतुर्थभक्त करीने अने बाकीना ९ प्रभुए छठ्ठ करीने दीक्षा लीधी हती. ( ६ ) वासुपूज्ये ६०० नी साथे, मल्लिनाथ ने पार्श्वनाथे ३०० नी साथे, वीरप्रभुए एकला, ऋषभदेवे ४००० साथे अने बाकीना १९ प्रभुए हजार हजार मनुष्य साथे दीक्षा लीधी हती. ऋषभदेवे विनीतामां, नेमिनाथे द्वारिकामां अने बाकीना २२ प्रभुए जन्मवाळी नगरीमां ज दीक्षा लीधी. ( ७–८ ) वृषभप्रभुए सिद्धार्थवन उद्यानमां, वासुपूज्ये विहारगेह वनमां, धर्मनाथे वप्रक नामना वनमां, मुनिसुव्रते नीलगुहा नामना वनमां, पार्श्वनाथे आश्रमपद वनमां, वीरप्रभुए ज्ञातखंडवनमां अने बाकीना १८ प्रभुए सहस्राम्र वनमां चारित्र ग्रहण कर्युं. तथा ऋषभदेवे चारमुष्टि लोच कर्यो अने बीजा बधा प्रभुए पंचमुष्टि लोच कर्यो. ( ९–१०–११ ) मल्लिनाथ, श्रेयांसनाथ, सुमतिनाथ, नेमिनाथ अने पार्श्वनाथे पूर्वाह्णे दीक्षा लीधी अने बीजा १९ प्रभुए पश्चिमाह्ने लीधी. ( १२ ) आद्य प्रभुने आद्य पारणुं एक वर्षे इक्षुना रसथी थयुं अने बाकीना बधा प्रभुए दीक्षाने बीजे ज दिवसे परमान्नवडे पारणुं कर्युं. ( १३ ) बाळकाळमां सर्वे प्रभु अंगुठावडे अमृतभोजी, व्रत लीधा पछी सर्वे शुद्ध आहारना

गार्हस्थ्येऽन्येऽन्नभोजिनः ॥ १४ ॥ विनीतायाः पुरः शाखा—पुरे पुरिमतालके । उद्याने शकटमुखे वृषभः प्राप केवलं ॥ १५ ॥ बहिः श्रीजृंभिकाग्रामा—दुपर्जुवालिकातटं । केवलं प्राप वीरोऽन्ये स्वस्वदीक्षावनेषु च ॥ १६ ॥

श्रीपार्श्वनेमिनाभेय—मल्लीनामष्टमस्पृशां । केवलं वासुपूज्यस्य चतुर्थभक्तशालिनः ॥ १७ ॥ शेषाणां कृतषष्ठाना—मुत्पन्नं सन्नकल्मषं । सर्वेषामपि पूर्वाह्णे पश्चिमाह्णेंतिमप्रभोः ॥ १८ ॥ आद्ये समवसरणे सर्वेषामर्हतामिह । उत्पन्नं तीर्थमंत्यस्य जिनेंद्रस्य द्वितीयके ॥ १९ ॥ यावदुत्पद्यते तीर्थ—मग्रिमस्य जिनेशितुः । तावत्पूर्वस्य पूर्वस्य भवेत्तीर्थमखंडितं ॥ २० ॥ अस्यामवसर्पिण्यां तु—आद्यात्सुविधिपर्यंतं शांतेश्चांत्यजिनावधि । अष्टस्वष्टस्वंतरेषु तीर्थमासीन्निरंतरं ॥ २१ ॥ मध्ये सप्तस्वंतरेषु नवमात्षोडशावधि । यावत्कालमभूत्तीर्थ—विच्छेदः स निरूप्यते ॥ २२ ॥ पुष्पदंतशीतलयोः शीतलश्रेयसोरपि । एकैकः पल्य-

---

भोजी ने गृहस्थपणामां आद्य प्रभु कल्पवृक्षना फळना भोगी; बीजा बधा प्रभु अन्नभोजी जाणवा. ( १४ ) विनीता नगरीना पुरिमताल नामना शाखापुरमां शकटमुख नामना उद्यानमां ऋषभप्रभु केवळज्ञान पाम्या, ( १५ ) वीरप्रभु जृंभिका गामनी बहार ऋजुवालिका नदीना तट उपर केवळज्ञान पाम्या अने बीजा बधा प्रभु पोतपोताना दीक्षावनमां केवळज्ञान पाम्या. ( १६ )

श्रीपार्श्वनाथ, नेमिनाथ, ऋषभदेव ने मल्लिनाथने अठम तपवडे केवळज्ञान थयुं, वासुपूज्यने चतुर्थभक्तवडे केवळज्ञान उत्पन्न थयुं ( १७ ) अने बाकीना १९ प्रभुने छठ तप कर्ये सवे पापनो नाश करनार केवळज्ञान थयुं. श्रीवीरप्रभुने पश्चिमाह्णे केवळज्ञान थयुं अने बीजा बधा प्रभुने पूर्वाह्णे थयुं. ( १८ ) बधा अरिहंतोना तीर्थनी स्थापना प्रथम समवसरणे थइ, अंत्य प्रभुनी बीजा समवसरणमां थइ. ( १९ ) ज्यांसुधीमां बीजा प्रभुनुं तीर्थ प्रवर्ते त्यांसुधी पूर्व पूर्व प्रभुनुं शासन अखंडपणे प्रवर्त्या करे; (२०) परंतु आ अवसर्पिणीमां तो पहेलाथी सुविधिनाथसुधी ने शांतिनाथथी अंत्य जिन वीरप्रभुसुधी आठ आठ आंतरामां अविच्छिन्नपणे तीर्थ प्रवर्त्युं. ( २१ ) मध्यना नवमाथी सोळमासुधीना सात आंतरामां जेटलो काळ तीर्थ विच्छेद पाम्युं ते कहीए छीए-( २२ ) ' पुष्पदंत ( सुविधिनाथ ) ने शीतळनाथना अने शीतळनाथ ने श्रेयांसनाथना आंतरामां पा पा पल्योपम तीर्थ-व्युच्छेद

तुर्यांश–स्तीर्थमन्त्रुव्यदंतरे ॥ २३ ॥ त्रयः पल्यचतुर्थांशाः श्रेयांसवासुपूज्ययोः । वासुपूज्यविमलयो–स्तुर्यः पल्योपमांशकः ॥ २४ ॥ त्रयः पल्यस्य तुर्यांशा विमलानंतयोरपि । एकः पल्यचतुर्थांशो मध्ये चानंतधर्मयोः ॥ २५ ॥ एकः पल्यस्य तुर्यांशो धर्मशांत्योः किलांतरे । केचित्पल्योपमान्याहुः पल्यतुर्यांशकास्पदे ॥ २६ ॥ तथाहुः सप्ततिशतस्थानके–इगइगतिगेगतिगइग इगं सइइगारपलिअचउभागे । वितन्ने इअ पलिए सुविहाइसु सत्ततिरथंते ॥ २७ ॥ दुष्पमारकपर्यंतं तीर्थं वीरजिनेशितुः । प्रवर्त्ततेऽव्यवच्छिन्नं छिन्नजन्मजरामयं ॥ २८ ॥ द्वाविंशतिसहस्राब्द–न्यूनैकपूर्वलक्षयुक् । तीर्थं वीरस्याब्धिकोटा–कोटी नाभेयतीर्थतः ॥ २९ ॥ कालमानमिदं चादि–जिनतीर्थप्रवृत्तितः । श्रीवीरतीर्थपर्यंतं यावद् ज्ञेयं विचक्षणैः ॥ ३० ॥

उपसर्गा १ स्तथा गर्भा–पहारो २ ऽभाविता सभा ३ । चमरोत्पतनं ४ चंद्र–सूर्यावतरणं ५ तथा ॥ ३१ ॥ हरेरमरकंकायां गमनं ६

---

रहो, (२३) श्रेयांस ने वासुपूज्यना आंतरामां पोणुं पल्योपम, वासुपूज्य ने विमळनाथना आंतरामां पा पल्योपम, ( २४ ) विमळनाथ ने अनंतनाथना अंतरमां पोणुं पल्योपम, अनंतनाथ ने धर्मनाथना आंतरामां पा पल्योपम ने धर्मनाथ ने शांतिनाथना आंतरामां पा पल्योपम ' अहीं केटलाक पल्योपमना चोथा भागने बदले आखुं पल्योपम कहे छे. ( २५–२६ ) श्री सप्ततिशतस्थानकमां कह्युं छे के–एक, एक, त्रण, एक, त्रण, एक ने एक–आ प्रमाणे कुल अग्यार पल्योपमना चोथा भाग ( २॥। पल्योपम ) जाणवा. अन्य सुविधि विगेरे सात तीर्थंकरोना आंतरामां पल्योपम पल्योपम कहे छे. (२७) छेदी नाख्या छे जन्म, जरा ने मरण जेणे एवुं वीरप्रभुनुं शासन पांचमा दुष्पमारकना अंत सुधी अव्यवच्छिन्नपणे प्रवर्तशे. ( २८ ) श्रीऋषभदेवना तीर्थ पछी वीरप्रभुनुं तीर्थ बावीश हजार वर्षे न्यून अने एक लाख पूर्वे अधिक एक कोटाकोटी सागरोपमे प्रवर्त्युं. ( २९ ) आ काळमान आदिजिने तीर्थ प्रवर्ताव्युं त्यांथी ( एटले एक हजार वर्षे न्यून एक लाख पूर्वनुं तेमनुं आयुष्य बाकी हतुं त्यारे प्रवर्ताव्युं त्यांथी ) वीर प्रभुनुं तीर्थ प्रवर्त्युं त्यां सुधी विचक्षणोए समजवुं. ( ३० )

आ अवसर्पिणीमां दश आश्चर्य ( अछेरां ) थयां ते आ प्रमाणे—१ केवळज्ञान थया पछी उपसर्ग, २ गर्भापहार, ३ अभावित पर्षदा, ४ चमरेंद्रनो उत्पात, ५ चंद्रसूर्यनुं मूळ-

स्त्रीजिनेश्वरः ७ । हरिवंशकुलोत्पत्ति ८–रर्चा चासंयतात्मनां ९ ॥ ३२ ॥ साष्टकशतस्य सिद्धि–र्ज्येष्ठावगाहनावतां १० । अनंतकालभावीनि दशाश्चर्याण्यमून्यहो ॥ ३३ ॥ आद्यानि पंचाश्चर्याणि तीर्थेत्यस्यापराणि तु । नेमिमल्लिशीतलश्री–सुविधिप्रथमार्हतां ॥ ३४ ॥

नाभेयोऽष्टापदे वीरो–ऽपापायां पुरि निर्वृतः । वासुपूज्यश्च चंपायां नेमी रैवतकाचले ॥३५॥ अन्ये संमेतशिखरे पर्यंकासनसंस्थिताः । श्रीनेमिवीरवृषभाः कायोत्सर्गासनाः परे ॥३६॥ आद्यः षड्भिरुपवासै–र्द्वाभ्यां वीरः शिवं गतः । शेषा मासक्षपणेन तपसा निर्वृतिं ययुः ॥३७॥ आद्यः सहस्रैर्दशभिः षड्भिस्तैर्विमलो जिनः । अनंतजित्सप्तभिस्तैः श्रीशांतिर्नवभिः शतैः ॥३८॥ सप्तमैकोनविंशौ च पंचभिः पंचभिः शतैः । सिद्धः पद्मप्रभः सार्द्धं त्रिभिरष्टोत्तरैः शतैः ॥ ३९ ॥ नेमिः षट्त्रिंशदधिकैः साधूनां पंचभिः शतैः । षड्भिः शतैर्वासुपूज्यो धर्मः साष्टशतेन च ॥ ४० ॥ त्रयस्त्रिंशत्साधुयुक्तः पार्श्वनाथः शिवं ययौ । एकाकी चरमः स्वामी

---

विमाने अवतरण, ६ वासुदेवनुं अमरकंका जवुं, ७ स्त्रीतीर्थंकर, ८ हरिवंशकुलोत्पत्ति, ९ असंयतिनी पूजा अने १० ज्येष्ठ अवगाहनावाळा १०८ नी एक समये सिद्धि. आवां आश्चर्यो अनंते काळे थाय छे. ( ३१–३३ ) आ दश आश्चर्यमां प्रथमना पांच आश्चर्य वीरप्रभुना तीर्थमां, बाकीना पांचमांथी नेमिनाथ, मल्लिनाथ, शीतळनाथ, सुविधिनाथ ने ऋषभप्रभुना तीर्थमां एकेक समजवुं. ( ३४ )

ऋषभप्रभु अष्टापदे, वीरप्रभु अपापानगरीए, वासुपूज्य चंपानगरीए अने नेमिनाथ रैवताचळे सिद्धिपद पाम्या ( ३५ ) अने बाकीना २० प्रभु संमेतशिखरे सिद्धिपदने पाम्या. श्रीनेमिनाथ, वीरप्रभु ने ऋषभदेव पर्यंकासने अने बाकीना २१ प्रभु कायोत्सर्गासने सिद्धिपदने पाम्या छे. ( ३६ ) ऋषभदेव छ उपवासे ने वीरप्रभु बे उपवासे मोक्षे गया, बाकीना २२ प्रभु मासक्षपणना तपवडे निर्वृतिपदने पाम्या. ( ३७ ) ऋषभदेव दश हजारसाथे, विमळनाथ छ हजारसाथे, अनंतनाथ सात हजारसाथे, शांतिनाथ ९०० नी साथे, सातमा सुपार्श्वनाथ ने ओगणीशमा मल्लिनाथ पांचशें पांचशेंनी साथे, पद्मप्रभु ३०८ नी साथे, नेमिनाथ ५३६ नी साथे, वासुपूज्य छशेंनी साथे, धर्मनाथ १०८ नी साथे, पार्श्वनाथ ३३ साधुनी साथे, वीरप्रभु एकला ने बाकीना १२ प्रभु हजार

सहस्रेणान्विताः परे ॥ ४१ ॥ अष्टात्रिंशत्सहस्राणि पंचाशीतिसमन्विता।
चतुःशती जिनैः सार्द्धं निर्वृताः सर्वसंख्यया ॥ ४२ ॥ तृतीयषष्ठनवम-
द्वादशा अपराह्णके। शेषाः श्रेयांसपर्यंताः पूर्वाह्णे वृषभादयः ॥ ४३ ॥
धर्मारनमिवीराश्चा-पररात्रे शिवं गताः। शेषास्तु पूर्वरात्रेऽष्टौ सिद्धाः
श्रीविमलादयः ॥ ४४ ॥

इंद्रभूतिरग्निभूति-र्वायुभूतिरमी त्रयः। सहोदरास्तथा व्यक्त-
सुधर्माणौ द्विजोत्तमौ ॥ ४५ ॥ षष्ठो मंडितपुत्राख्यो मौर्यपुत्रश्च
सप्तमः। अकंपितोऽचलभ्राता मेतार्यश्च प्रभासकः ॥ ४६ ॥ अमी
गणधरा एका-दश श्रीचरमप्रभोः। अथैषां परिवारादि-स्वरूपं किंचि-
दुच्यते ॥ ४७ ॥ वसुभूतिसुताः पृथ्वी-कुक्षिजाः प्रथमे त्रयः।
पंचशिष्यशतोपेता गोर्बरग्रामवासिनः ( वेदवेदांगपारगाः ) ॥ ४८ ॥
कोल्लाकाख्यसन्निवेश-वास्तव्यौ तुर्यपंचमौ। वारुणीमातृकस्तत्र। तुरी-
यो धनमित्रभूः ॥ ४९ ॥ पंचमो भद्दिलाकुक्षि-रत्नं धम्मिलनंदनः। उ-

---

हजार मुनिओनी साथे मोक्षे गया छे. ( ३८-४१ ) सर्व संख्याए ३८४८५ मुनिओ २४ प्रभुनी साथे मोक्षे गया छे. ( ४२ ) त्रीजा, छट्ठा, नवमा ने बारमा—ए चार प्रभु अपराह्ने अने बाकीना ऋषभदेवथी श्रेयांसनाथसुधीना ८ ( १-२-४-५-७-८-१०-११ मा ) पूर्वाह्ने, धर्मनाथ, अरनाथ, नमिनाथ ने वीरप्रभु पाछली रात्रे मोक्षे गया छे ने बाकीना आठ ( १३-१४-१६-१७-१९-२०-२२-२३ मा ) प्रभु श्रीविमळनाथ विगेरे पूर्व रात्रिए मोक्षे गया छे. ( ४३-४४ )

वीरप्रभु गणधरवर्णन—इंद्रभूति, अग्निभूति, वायुभूति, ( आ त्रण सहोदर ) तथा व्यक्त, सुधर्मा ( आ बे द्विजोत्तम ), छट्ठा मंडितपुत्र, सातमा मौर्यपुत्र, अकंपित, अचळभ्राता, मेतार्य ने प्रभास—आ अगियार श्रीचरम प्रभुना गणधरो जाणवा. ए गणधरोना परिवारादिनुं स्वरूप कांइक कहे छे. ( ४५-४७ ) प्रथमना त्रण वसुभूतिना पुत्र, पृथ्वीनी कुक्षिथी थयेला, गोर्बर गामना रहेनारा, पांच सो पांच सो शिष्योना परिवारवाळा, ( वेद-वेदांगना पारगामी ) हता. ( ४८ ) चोथा ने पांचमा कोल्लाकसन्निवेशना रहेनारा हता, तेमां चोथा धनमित्र पिता ने वारुणी माताना पुत्र अने पांचमा धम्मिलना नंदन भद्दिलानी कुक्षिथी थयेला हता. ए बंने पांच सो पांच सो शिष्योथी सेवा कराता हता.

पास्यमानौ द्वावेनौ शिष्याणां पंचभिः शतैः ॥ ५० ॥ तथा मौर्यसन्निवेश–वासिनौ षष्ठसप्तमौ । धनदेवसुतः षष्ठः सप्तमो मौर्यनंदनः ॥ ५१ ॥ विजयातनुजौ सार्द्ध–शतत्रयपरिच्छदौ । देशाचारादविरुद्धा पृथक्पितृकता तयोः ॥ ५२ ॥ तत्र देशे कुले ह्यस्मिन् मृते भर्त्तरि योषितां । आचीर्णत्वादविरुद्धो धवांतरपरिग्रहः ॥५३॥ जयंतीतनुजो देव–नंदनोऽकंपिताह्वयः । मिथिलापुरवास्तव्यः शतत्रयपरिच्छदः ॥ ५४ ॥ नवमो कोशलावासी नंदाभूर्वसुवप्तृकः । तुंगिकाख्यसन्निवेश–वास्तव्यो दशमो गणी ॥ ५५ ॥ स दत्तपुत्रो वरुण–देवागर्भसमुद्भवः । एकादशो राजगृहवासी द्विजकुलध्वजः ॥ ५६ ॥ सोऽतिभद्राकुक्षिरत्नं सर्वेऽपि नवमादयः । उपासिता व्यक्तभक्ति–सक्तैः शिष्यशतैस्त्रिभिः ॥ ५७ ॥ ज्येष्ठा १ च कृत्तिका २ स्वातिः ३ श्रुति ४ रर्यमदेवतं ५ । मघा ६ ब्राह्म्यु ७ त्तराषाढा ८ मार्गा ९ श्विन्यौ १० च पुष्यभं ११ ॥५८॥ एकादशानां जन्मर्क्षाण्येतानि गणधारिणां । गृहस्थत्वादिपर्याय–परिमाणमथ ब्रुवे ॥ ५९ ॥ गार्हस्थ्येऽब्दानि पंचाशत् छाद्मस्थ्ये त्रिंशदेव च । सर्वज्ञत्वे द्वादश द्वा-

( ४९–५० ) छट्ठा ने सातमा मौर्यसन्निवेशना रहेनारा हता. तेमां छट्ठा धनदेवना पुत्र ने सातमा मौर्यना पुत्र हता. ते बनेनी माता विजया हती अने तेमने साडात्रणसो साडात्रणसो शिष्योनो परिवार हतो. तेमनुं जुदा जुदा पितापणुं त्यांना देशाचारथी अविरुद्ध हतुं. ( ५१–५२ ) ते देशमां ने ते कुळमां भर्त्तार मरण पामे सते स्त्री बीजा भर्त्तारने ग्रहण करी शकती होवाथी ते आचीर्ण होवाने लीधे अविरुद्ध छे. ( ५३ ) आठमा अकंपित देव नामना पिताना ने जयंती माताना पुत्र मिथिलापुरमां रहेनार त्रणसेंना परिवारवाळा हता. ( ५४ ) नवमा कोशलावासी ने नंदामाता ने वसुपिताना पुत्र हता. दशमा तुंगिका नामना सन्निवेशमां रहेनार, दत्तपिताना पुत्र, वरुणादेवीना गर्भथी उत्पन्न थयेल हता. अग्यारमा राजगृहवासी द्विजकुळमां ध्वजसमान ( बलना ने ) अतिभद्राना पुत्र हता. नवमा, दशमा ने अग्यारमा प्रगटपणे भक्तिमां आसक्त एवा त्रण सो त्रण सो शिष्योथी सेवा कराता हता. ( ५५–५७ ) ज्येष्ठा १, कृत्तिका २, स्वाति ३, श्रवण ४, उत्तराफाल्गुनी ५, मघा ६, रोहिणी ७, उत्तराषाढा ८, मृगशीर्ष ९, अश्विनी १० अने पुष्य ११—अग्यार गणधरना ए जन्म नक्षत्र जाणवा. हवे तेना गृहस्थत्वादिपर्यायनुं प्रमाण अने सर्वायु कहीए छीए. ( ५८–५९ ) पहेला गणधरनुं गृहस्थपणामां ५० वर्ष, छद्मस्थपणामां ३० वर्ष अने

नवतिश्चायुरादिमे ॥ ६० ॥ अग्निभूतौ च षट्चत्वा–रिंशद् द्वादश षोडश। गार्हस्थ्यादिषु सर्वायुः स्युश्चतुःसप्ततिः समाः ॥ ६१ ॥ वायुभूतौ द्विचत्वारिं–शद्दशाष्टादशापि च। गृहस्थत्वादिभावेषु सर्वायुः सप्ततिः समाः ॥ ६२ ॥ व्यक्तस्वामिनि पंचाशद् द्वादशाष्टादशापि च। त्रिषु भावेषु सर्वायु–रशीतिः शरदः स्मृताः ॥ ६३ ॥ पंचाशच्च द्विचत्वारिं–शदष्टौ शरदः क्रमात्। सुधर्मस्वामिनो गार्ह–स्थ्यादिष्वायुश्च तच्छतं ॥ ६४ ॥ संवत्सरास्त्रिपंचाश–च्चतुर्दश च षोडश। गार्हस्थ्यादिषु षष्ठस्य त्र्यशीतिरखिलं जनुः ॥ ६५ ॥ मौर्यस्याब्दाः पंचषष्टि–श्चतुर्दश च षोडश। गृहित्वादिषु भावेषु शतं पंचोनमन्वितं ॥६६॥ अकंपितस्याष्टचत्वा–रिंशन्नवैकविंशतिः। गृहित्वादिषु वर्षाणि सर्वायुरष्टसप्ततिः ॥ ६७ ॥ नवमस्य षट्चत्वारिं–शद् द्वादश चतुर्दश। त्रिषु भावेषु वर्षाणि सर्वमायुर्द्विसप्ततिः ॥ ६८ ॥ मेतार्यस्य च षट्त्रिंश–द्दश षोडश वत्सराः। पर्यायेषु त्रिषु प्रोक्तं द्वाषष्टिः सर्वजीवितं ॥ ६९ ॥ प्रभासस्य षोडशाष्टौ क्रमात् षोडश वत्सराः। पर्यायेषु त्रिष्वशेषं चत्वारिंशच्च जीवितं ॥ ७० ॥ सिद्धा

---

बार वर्ष सर्वज्ञपणामां कुल ९२ वर्षनुं आयुष्य हतुं. (६०) अग्निभूतिनुं ४६ वर्ष गृहस्थपणामां, बारवर्ष छद्मस्थपणामां ने १६ वर्ष सर्वज्ञपणामां कुल ७४ वर्षनुं आयुष्य हतुं. (६१) वायुभूतिनुं ४२–१० ने १८ एम गृहस्थत्वादिभावने विषे वर्तता कुल ७० वर्षनुं आयु हतुं. (६२) व्यक्तस्वामीनुं ५०, १२ ने १८ वर्ष त्रणे भावमां वर्तता कुल ८० वर्षनुं आयु हतुं. (६३) सुधर्मास्वामीनुं ५०–४२–८ वर्ष गृहस्थत्वादिभावमां वर्तता कुल १०० वर्षनुं आयु हतुं. (६४) छठ्ठा मंडितपुत्रनुं ५३–१४ ने १६ वर्ष गृहस्थादिभावमां वर्तता कुल ८३ वर्षनुं आयु हतुं. (६५) मौर्यपुत्रनुं ६५–१४ ने १६ वर्ष गृहस्थादिभावमां वर्तता कुल ९५ वर्षनुं आयु हतुं. (६६) अकंपितनुं ४८–९ ने २१ वर्ष गृहस्थादिभावमां वर्तता कुल ७८ वर्षनुं आयु हतुं. (६७) नवमा अचळभ्रातानुं ४६–१२ ने १४ वर्ष गृहस्थादिभावमां वर्तता कुल ७२ वर्षनुं आयु हतुं. (६८) मेतार्यनुं ३६–१० ने १६ वर्ष गृहस्थादि त्रणे भावमां वर्तता कुल ६२ वर्षनुं आयु हतुं. (६९) प्रभासनुं १६-८ ने १६ वर्ष गृहस्थादि त्रणे पर्यायमां वर्तता कुल ४० वर्षनुं आयु हतुं. (७०) ए अग्यारे गणधरो राजगृहीपासे वैभारगिरि उपर एक मासनुं

एकादशाप्येते गिरौ वैभारनामनि । त्रिहितानशना मासं पुरे राजगृहाऽभिधे ॥ ७१ ॥ नव सिद्धिं गता वीरे नाथे जीवत्यथादिमः । सिद्धे प्रभौ द्वादशभि–र्विंशत्याऽब्दैश्च पंचमः ॥ ७२ ॥ सुधर्मस्वामिनः शिष्यः प्रशिष्यस्त्रिशलाभुवः । चरमः केवली जंबू–स्वामी चामीकरच्छविः ॥७३॥ स राजगृहवास्तव्य ऋषभदत्तनंदनः । धारणीकुक्षिसंभूत आजन्म ब्रह्मचार्यभूत् ॥ ७४ ॥ षोडशाब्दानि गार्हस्थ्यं छद्मस्थत्वं च विंशतिं । सर्वज्ञत्वं चतुश्चत्वा–रिंशतं पर्यपालयत् ॥ ७५ ॥ वर्षाण्यशीतिं सर्वायुः परिपूर्यांतिमप्रभौ । शिवं गते चतुःषष्ट्या वर्षैर्भेजे शिवश्रियं ॥ ७६ ॥ अत्र च–अकंपिताचलभ्रात्रो–र्येन्मेतार्यप्रभासयोः । एकाभूद्वाचना तस्माद्वीरनेतुर्गणा नव ॥ ७७ ॥ एकवाचनिकः साधु–समुदायो भवेद्गणः । तेऽन्येषामर्हतां ज्ञेया गणभृत्संख्यया समाः ॥ ७८ ॥ समुच्चिता गणाधीशाः सर्वेषामर्हतां समे । स्युर्द्विपंचाशदधिका–श्चतुर्दश शता इह ॥७९॥

श्रीवीरस्वामिनः साधु–सहस्राणि चतुर्दश । षट्त्रिंशच्च सहस्राणि

---

अनशन करीने सिद्धिपदने पाम्या छे. ( ७१ ) एमांथी नव वीरप्रभुनी हयातिमां सिद्धिस्थानने पाम्या छे. प्रथम गणधर प्रभुना निर्वाण पछी १२ वर्षे ने पांचमा सुधर्म गणधर प्रभुना निर्वाण पछी २० वर्षे सिद्धिपदने पाम्या छे. ( ७२ ) त्रिशलामाताना पुत्र वीरप्रभुना प्रशिष्य अने सुधर्मास्वामीना मुख्य शिष्य जंबुस्वामी सुवर्णसरखी कांतिवाळा ते छेल्ला केवळी थया छे. ( ७३ ) तेओ राजगृहीना रहेनारा ऋषभदत्तना पुत्र धारिणीनी कुक्षिथी थयेला हता ने जन्मथी ज ब्रह्मचारी रह्या हता. ( ७४ ) तेओ गृहस्थपणामां १६ वर्ष, छद्मस्थपणामां २० वर्ष ने सर्वज्ञपणामां ४४ वर्ष रहेवाथी कुल ८० वर्षनुं आयु परिपूर्ण करीने अंतिम प्रभु सिद्ध थया पछी ६४ वर्षे सिद्धिपदने पाम्या छे. ( ७५–७६ ) आ ११ गणधरमां अकंपित ने अचलभ्राताना तेम ज मेतार्य ने प्रभासनी एक वाचना होवाथी वीरप्रभुना गण नव थया छे. ( ७७ ) एक वाचनावाळा साधुना समुदायने गण कहेवाय छे. बीजा बधा प्रभुना गणधरनी संख्या जेटला ज गण थया छे. ( ७८ ) सर्व अरिहंतना सर्व गणधरोनी संख्या एकत्र करीए तो १४५२ नी थाय छे ( ७९ )

श्रीवीरप्रभुना परिवारमां १४००० साधु ने ३६००० महात्मा एवी साध्वीओ

संयतीनां महात्मनां ॥ ८० ॥ इदं किल चतुरशीतिसहस्रादिकमृषभादीनां तीर्थकृतां श्रमणपरिमाणं प्रधानसूत्रविरचनसमर्थान् श्रमणानधिकृत्य वेदितव्यं, इतरथा पुनः सामान्यश्रमणाः प्रभूततरा अपि तस्मिन् तस्मिन् ऋषभादिके आसीरन् इति नंदीवृत्तौ, गच्छाचारवृत्तौ च. श्राद्धानां लक्षमेकोन–षष्ट्या युक्तं सहस्रकैः । लक्षत्रयं श्राविकाणा–मष्टादशसहस्रयुक् ॥ ८१ ॥ सर्वज्ञानां शताः सप्त पंच मानसवेदिनां । सहस्रमेकमवधि–ज्ञानिनां त्रिशतान्वितं ॥ ८२ ॥ वैक्रियाणां शताः सप्त सच्चतुर्दशपूर्विणां । त्रयः शता वादिवर–मुनीनां च चतुःशती ॥ ८३ ॥ सर्वेऽष्टाविंशतिर्लक्षाः सर्वेषां साधवोऽर्हतां । अष्टाचत्वारिंशता च सहस्रैरधिकाः स्मृताः ॥ ८४ ॥ संयतीनां चतुश्चत्वा–रिंशल्लक्षाः सहस्रकाः । षट्चत्वारिंशदेवाथ षट्संयुक्ता चतुःशती ॥ ८५ ॥ लक्षाणि पंचपंचाशत् श्रावकाणां गुणौकसां । सहस्रैरष्टचत्वारिं–शतोपेतानि निश्चितं ॥ ८६ ॥ एका कोटी पंच लक्षा–ण्यष्टात्रिंशत्सहस्रकाः सर्वाग्रं श्राविकाणां च सर्वेषामर्हतामिह ॥ ८७ ॥ षट्सप्ततिसहस्राढ्यं लक्षमेकं शताधिकं । सर्वेषामर्हतामुक्तं सर्वाग्रं सर्ववेदिनां ॥ ८८ ॥ लक्षमेकं तथा

---

जाणवी. ( ८० ) अहीं ८४००० विगेरे ऋषभादि तीर्थंकरोना श्रमणनुं परिमाण कहेलुं छे ते प्रधानसूत्र रचवामां समर्थ श्रमणोने आश्रीने जाणवुं. ते विना सामान्य साधुओ घणी मोटी संख्यामां ते ते ऋषभादिक प्रभुना परिवारमा थया हता, एम श्री नंदीसूत्रनी वृत्तिमां तथा गच्छाचारनी वृत्तिमां कहेलुं छे श्री वीरप्रभुना श्रावको १५९००० ने श्राविकाओ ३१८०००, ( ८१ ) केवळज्ञानीओ ७००, मनःपर्यवज्ञानी ५००, अवधिज्ञानी १३००, ( ८२ ) वैक्रियलब्धिवाळा ७००, चौदपूर्वी ३०० अने वादि मुनिओ ४०० हता. ( ८३ )

चोवीशे प्रभुना मळीने साधु अठ्ठावीश लाख ने ४८ हजार अने साध्वीओ ४४ लाख ४६ हजार चार सो ने छ थाय छे ( ८४- ८५ ) गुणवडे श्रेष्ठ श्रावको ५५ लाख ने ४८ हजार ने श्राविकाओ १०५३८००० थाय छे. ( ८६–८७ ) सर्व प्रभुना केवळज्ञानीनी संख्या १७६१०० नी कहेली छे ( ८८ ) अने मनःपर्यवज्ञानीनी संख्या १४५५९१ नी

पंच–चत्वारिंशत्सहस्रकाः। शताः पंचैकनवति–युक्ता मानसेवेदिनां ॥ ८९ ॥ लक्षमेकं त्रयस्त्रिंश–त्सहस्राः सचतुःशताः। उक्ता जिनानां सर्वेषा–मवधिज्ञानशालिनः ॥ ९० ॥ त्रयस्त्रिंशत्सहस्राणि शतानि नव चोपरि । अष्टानवत्युपेतानि स्युश्चतुर्दशपूर्विणः ॥ ९१ ॥ लक्षद्वयं तथा पंच–चत्वारिंशत्सहस्रकाः । अष्टाढ्ये द्वे शते सर्वे लसद्वैक्रियलब्धयः ॥ ९२ ॥ षड्विंशतिः सहस्राणि लक्षमेकं शतद्वयं । वादिनो मुनयः सर्वे भवंत्येवं समुच्चिताः ॥ ९३ ॥ उक्ता विशेषमुनयो येऽमी गणधरादयः । तैर्वर्जिताः सर्वसाधु–संख्याः पूर्वनिरूपिताः ॥ ९४ ॥ सामान्यमुनिसंख्याः स्युः सर्वेषामर्हतामिह । यथायोगं भावनीयास्ताः सर्वास्तात्त्विकैः स्वयं ॥९५॥ एकोनविंशतिर्लक्षाः षडशीतिः सहस्रकाः । एकपंचाशदधिकाः सामान्यमुनयोऽखिलाः ॥ ९६ ॥ तथोक्तं–गणहर १ केवलि २ मण ३ ओहि ४ पुव्वि ५ वेउव्वि ६ वाइ ७मुणिसंखं । मुणिसंखाए सोहिय नेया सामन्नमुणिसंखा ॥ ९७ ॥

द्वाविंशतिः सहस्राणि तथा नव शतानि च । वृषभस्यानुत्तरौपपातिका मुनयो मताः ॥ ९८ ॥ श्रीनेमिपार्श्ववीराणां षोडश द्वादशाष्ट च ।

---

कहेली छे. ( ८९ ) अवधिज्ञानीओनी संख्या १३३४०० नी कहेली छे. (९०) ३३९९८ नी संख्या चौदपूर्वीनी कहेली छे. ( ९१ ) वैक्रियलब्धिवाळानी संख्या २४५२०८ नी कही छे. (९२) अने वादी मुनिओनी संख्या १२६२०० नी कही छे—आ प्रमाणे एकत्र संख्या थाय छे. (९३) जे अहीं गणधरादिक विशेष मुनिओनी संख्या ( ८६१९४९ ) कही छे तेने पूर्वे कहेली सर्व साधुओनी ( २८४८००० ) संख्यामांथी बाद करवाथी जे संख्या आवे ते सर्व तीर्थंकरोना सामान्य साधुओनी संख्या थाय छे ते यथायोग्य रीते प्रत्येक तीर्थंकरोमां पण तात्त्विकोए पोतानी मेळे जाणी लेवी. ( ९४–९५ ) आ प्रमाणे करतां सामान्य मुनिओनी संख्या १९ लाख छाशी हजार ने एकावननी थाय छे.( ९६ ) ते विषे कह्युं छे के–गणधर, केवळी, मनःपर्यवज्ञानी, अवधिज्ञानी, चौदपूर्वी, वैक्रियलब्धिवाळा अने वादिओरूप विशिष्ट मुनिओनी ( आठ लाख एकसठ हजार नव सो ने ४९ नी ) संख्याने कुल मुनिसंख्यामांथी बाद करतां सामान्य मुनिओनी संख्या थाय छे. ( बंने मळीने २८४८००० ) थाय छे. ( ९७ )

श्री वृषभदेवना अनुत्तरोपपातिक मुनिओनी संख्या २२९०० नी कही छे. ( ९८ ) श्री नेमि, पार्श्व ने वीरप्रभुनी अनुक्रमे १६००, १२०० ने ८०० नी संख्या कही छे.

क्रमाच्च्युतास्ते शेषाणां न ज्ञायंतेऽधुनार्हतां ॥ ९९ ॥ येषां जिनानां यावंतः शिष्यास्तै रचितानि च । प्रकीर्णकानि तावंति तेषामित्युदितं श्रुते ॥ ११०० ॥ तावंत एव प्रत्येक–बुद्धा अपि निरूपिताः । प्रकीर्णकानां ब्रूमोऽथ स्वरूपं किंचिदागमात् ॥ १ ॥ अर्हदुक्तानुसारेण श्रमणा यन्महाधियः । रचयंतीह तत्सर्वं शास्त्रं ज्ञेयं प्रकीर्णकं ॥ २ ॥ उत्कालिकमंगबाह्यं दशवैकालिकादिकं । अंगबाह्यं कालिकं य–च्चोत्तराध्ययनादिकं ॥ ३ ॥ प्रकीर्णकानि सर्वाणि तानि ज्ञेयानि धीधनैः । प्रत्येकबुद्धैरन्यैर्वा रचितानि महात्मभिः ॥ ४ ॥

अत्र च मतत्रयं–श्रीऋषभादिजिनानां चतुरशीतिसहस्रादिप्रमाणैः स्वस्वशिष्यै रचितानि तावत्संख्याकान्येव प्रकीर्णकानीति केचित् । ऋषभादिजिनानां स्वस्वतीर्थभाविभिश्चतुर्विधबुद्ध्युपेतैरपरिमितैः साधुभिर्विरचितानि अपरिमितान्येव प्रकीर्णकानीत्यन्ये, ऋषभादिजिनानां स्वस्वतीर्थभाविभिरपरिमितैः प्रत्येकबुद्धैर्विरचितानि अपरिमितान्येव प्रकीर्णकानीत्यपरे, इत्याद्यर्थतो नंदीसूत्रवृत्तितोऽवसेयं, गच्छाचारवृत्तिर्वा विलोकनीयेति.

---

बाकीना २० प्रभुनी अनुत्तरोपपातिकनी संख्या अधुना जाणवामां नथी. (९९) जे प्रभुना जेटला शिष्यो होय तेमना रचेला तेटला प्रकीर्णको होय एम श्रुतमां कह्यु छे. (११००) अने प्रत्येकबुद्ध पण तेटला ज कह्या छे. प्रकीर्णकोनुं स्वरूप आगमाधारे कांइक कहीए छीए. (१) अरिहंतना कथनने अनुसारे महाबुद्धिमान श्रमणो जे शास्त्र रचे छे ते अहीं प्रकीर्णक जाणवा. (२) उत्कालिक अंगबाह्य दशवैकालिकादि जाणवा अने अंगबाह्य कालिक उत्तराध्ययनादि जाणवा, (३) सर्व प्रकीर्णको बुद्धिमानोए ते प्रकारना जाणवा के जे प्रत्येकबुद्धोए अथवा अन्य महात्माओए ज रचेला होय. (४) अहीं त्रण मत छे ते आ प्रमाणे—

श्रीऋषभादि तीर्थंकरोना ८४००० विगेरे प्रमाणवाळा पोतपोताना शिष्यरूप मुनिओए जे रचेला तेटला ज प्रकीर्णको जाणवा, एम केटलाक कहे छे. केटलाक कहे छे के–ऋषभादि जिनोना स्वस्वतीर्थभावी चतुर्विध बुद्धियुक्त अपरिमित साधुओए रचेला अपरिमित ज प्रकीर्णको जाणवा. वळी बीजा एम कहे छे के–ऋषभादि जिनोना स्वस्वतीर्थभावी अपरिमित प्रत्येकबुद्धोए रचेला अपरिमित ज प्रकीर्णको जाणवा. इत्यादि अर्थथी श्रीनंदीसूत्रवृत्तिथी जाणवुं. अथवा गच्छाचारनी वृत्ति जोवी.

पट्टाधिपानसंख्येयान् यावत् श्रीवृषभप्रभोः । अविच्छिन्ना गतिर्मोक्षे प्रावर्त्तत महात्मनां ॥ ५ ॥ तानष्टौ चतुरो यावत् क्रमात् श्रीनेमिपार्श्वयोः त्रीन् वीरस्य परेषां तु संख्येयान्निखिलार्हतां ॥ ६ ॥ अंतर्मुहूर्त्तेऽतिक्रांते श्रीनाभेयस्य केवलात् । प्रावर्त्तत गतिर्मोक्षे नेमेर्वर्षद्वये गते ॥ ७ ॥ पार्श्वस्य त्रिषु वर्षेषु चतुर्षु चरमप्रभोः । शेषाणां पुनरेकादि–दिवसातिक्रमे सति ॥ ८ ॥

अभूत्प्रवृत्तिः पूर्वाणा–मायात्कुंथुजिनावधि । असंख्यकालं संख्येय–कालं पार्श्वजिनावधि ॥ ९ ॥ एकं सहस्रं वर्षाणां महावीरस्य साभवत् । एतावान् पूर्वविच्छेद–कालोऽपि सकलार्हतां ॥ १० ॥ परं वर्षसहस्राणां विंशतिश्चरमेशितुः । पार्श्वस्य नासौ सर्वेषा–मातीर्थमपरं श्रुतं ॥ ११ ॥ श्रुतेष्वंगादिष्वबद्धा ज्ञानिभिश्च प्रकाशिताः । आदेशास्ते ज्ञाताः पंचां–त्यस्यान्येषामनेकधा ॥ १२ ॥ कुरुटोत्कुरुटौ साधू सप्तमं नरकं गतौ ।

---

श्रीऋषभप्रभुना असंख्याता पट्टाधिप एवा महात्माओनी अविच्छिन्नपणे मोक्षगति जाणवी. (५) श्रीनेमिनाथना आठ पाट ने पार्श्वनाथना चार पाट मोक्षे गयेल जाणवा. श्रीवीरप्रभुना त्रण पाट जाणवा. बाकीना सर्व तीर्थकरोना संख्याता पाट मोक्षे गयेल जाणवा. ( ६ ) श्रीऋषभदेवस्वामीने केवळज्ञान प्राप्त थयुं त्यारपछी एक अंतर्मुहूर्त्ते मोक्षमार्ग शरु थयो, नेमिनाथना केवळज्ञान पछी बे वर्षे, श्रीपार्श्वनाथप्रभुना केवळज्ञान पछी त्रण वर्षे, छेल्ला महावीरस्वामीना केवळज्ञान पछी चार वर्षे अने बाकीना वीश प्रभुना केवळज्ञान पछी एक विगेरे दिवस गया पछी मोक्षमार्ग शरु थयो. ( ७–८ )

पूर्वोनी प्रवृत्ति प्रथम जिनेश्वरथी कुंथुनाथ सुधी असंख्य काळ जाणवी, अने त्यांथी पार्श्वजिन सुधी संख्यात काळ जाणवी. ( ९ ) श्री वीर परमात्मा पछी एक हजार वर्ष सुधी प्रवृत्ति जाणवी. पूर्वविच्छेदकाळ पण सर्व जिनेश्वरोनो ए प्रमाणे ज जाणवो, ( १० ) पूर्व विनाना बीजा श्रुतनो काळ पूर्वना विच्छेद पछी वीश हजार वर्ष सुधी एटले कुल २१ हजार वर्ष सुधी जाणवो. श्री पार्श्वनाथ माटे आवो काळ न समजवो. ( तेमनी पछी तो वीर प्रभु थतां सुधी पूर्वश्रुत रहेल छे. ) अने बाकीना प्रभु माटे तेमनुं तीर्थ चालता सुधी अपरश्रुतनो–पूर्वविनाना श्रुतनो काळ जाणवो, ( ११ ) जे अंगादिश्रुतमां गुंथायेला न होय अने ज्ञानीओए प्रकाशित करेला होय ते आदेशो समजवा. तेवा आदेशो अंत्य प्रभुसंबंधी ५०० जाणवा अने अन्य प्रभुसंबंधी अनेक प्रकारना जाणवा. ( १२ ) कुरुट

वाल्येंगुष्ठाग्रसंपर्का–न्मेरुर्वीरेण कंपितः ॥ १३ ॥ विहाय वलयाकारं स्वयंभूरमणांबुधौ । संति पद्मानि मत्स्याश्च समग्राकारशालिनः ॥ १४ ॥ अत्यंतं स्थावरा सिद्धा मरुदेवा महासती । असंदब्धाः श्रुते ज्ञेया आदेशा एवमादयः ॥ १५ ॥

श्रेयांसः श्रावको मुख्यः श्रीनाभेयजिनेशितुः । ते नंदसूर्यशंखाख्या–स्त्रयाणां नेमितोऽर्हतां ॥ १६ ॥ सुभद्रा महासुव्रता सुनंदा सुलसापि च । मुख्याः स्युः श्राविका आद्य–नेमिपार्श्वांतिमार्हतां ॥ १७ ॥ शेषाणां स्वप्रसिद्धा इति.

इंद्रभूतिर्गणी मुख्य–श्चंदना च प्रवर्त्तिनी । श्रेणिको नृपतिर्भक्तः सम्यक्त्वं क्षायिकं दधत् ॥ १८ ॥ यक्षः श्रीवर्द्धमानस्य मातंगो गजवाहनः । द्विभुजो नकुलोपेता–पसव्यकरपंकजः ॥ १९ ॥ वामे करे च रुचिरं दधानो बीजपूरकं । श्यामांगकांतिः पुष्णाति श्रियं श्रीवीरसेविनां ॥ २० ॥ देवी सिद्धायिका सिंह–वाहनाढ्या चतुर्भुजा । पुस्तकाभयसंयुक्ता–पसव्यकरयामला ॥ २१ ॥ बीजपूरकवीणाढ्य–

---

ने उत्कृष्ट साधु सातमी नरके गया. बाल्यावस्थामां अंगुठाना संपर्कथी वीरप्रभुए मेरु कंपाव्यो, ( १३ ) स्वयंभूरमण समुद्रने विषे वलयाकारने मूकीने समग्र आकारवाळा पद्मो ने मत्स्यो छे. ( १४ ) अत्यंत स्थावर एवा ( स्थावरमांथी तरत आवेला एवा ) महासती मरुदेवा सिद्धिपदने पाम्या ' इत्यादि आदेशो श्रुतने विषे असंदब्ध जाणवा (१५)

श्री नाभेयजिनना मुख्य श्रावक श्रेयांस हता अने नेमि, पार्श्व तथा वीरप्रभुना नंद, सूर्य ने शंख नामना मुख्य श्रावक जाणवा. ( १६ ) तेम ज सुभद्रा, महासुव्रता, सुनंदा ने सुलसा ए चार अनुक्रमे आद्य जिन, नेमि, पार्श्व ने वीरप्रभुनी मुख्य श्राविका जाणवी. ( १७ ) शेष तीर्थंकरोना मुख्य श्रावक ने श्राविकाना नाम अप्रसिद्ध छे.

श्री वीरप्रभुना मुख्य गणधर इंद्रभूति, मुख्य प्रवर्त्तिनी चंदना ने क्षायिक समकितने धारण करनार नृपति श्रेणिक भक्त जाणवा. ( १८ ) श्रीवीरप्रभुनो यक्ष मातंग नामनो, गजना वाहनवाळो, बे भुजावाळो, तेमां जमणी भुजामां नकुलने धारण करनार अने वाम भुजामां सुंदर एवा बीजपूरने धारण करनार, श्याम अंगकांतिवाळो, श्रीवीर परमात्मानी सेवा करनारने लक्ष्मी आपनारो थयो. ( १९–२० ) देवी सिद्धायिका नामे सिंहना वाहनवाळी, चार भुजावाळी, जमणा बे हाथमां पुस्तक ने अभय अने डाबा बे

वामपाणिद्वया सती । श्रीवीरभक्ता हरित-वर्णा दिशंतु वांछितं ॥२२॥

यथास्यामवसर्पिण्या-मेवं प्राप्ता महोदयं । चतुर्विंशतिरर्हंत-स्तथा भाव्याः परास्वपि ॥ २३ ॥

इहैतदवसर्पिणीभरतवर्षभूयोषितो-
विशेषसुषमाकृतो जिनवराश्चतुर्विंशतिः ।
मयाऽप्रतिमया मुदा प्रतिहतामयाश्चिन्मयाः
स्तुता विगतविक्रियाः कृतधियां क्रियासुः श्रियं ॥ २४ ॥

विश्वाश्चर्यदकीर्त्तिकीर्तिविजयश्रीवाचकेंद्रांतिष-
द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ।
काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे
सर्गोऽयं प्रथितो निसर्गसुभगो द्वात्रिंश एषोऽभवत् ॥ २५ ॥

॥ इति श्रीलोकप्रकाशे द्वात्रिंशत्तमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

हाथमां बीजपूरक ने वीणाने धारण करनारी हरितवर्णवाळी श्री वीर परमात्माना भक्तोना वांच्छितने आपो. ( २१-२२ )

जेम आ अवसर्पिणीमां उपर कही गया प्रमाणे चोवीश तीर्थंकरो महोदयने प्राप्त करनारा थया तेम बीजी अवसर्पिणीमां पण जाणी लेवुं. ( २३ )

अहीं आ अवसर्पिणी अने भारतवर्षनी पृथ्वीरूपी बन्ने स्त्रीने विशेष सुख करनारा, सर्व आमयनो विनाश करनारा, ज्ञानमय अने विक्रिया रहित एवा २४ तीर्थंकरोनी में मोटा हर्षथी स्तवना करी ते बुद्धिमानोने लक्ष्मीप्रत्ये आपो. ( ११२४ )

विश्वने आश्चर्य पमाडनार छे कीर्त्ति जेमनी एवा श्री कीर्त्तिविजय वाचकेंद्रना शिष्य अने राजश्री तथा तेजपाळना पुत्र श्री विनयविजये जे आ काव्य रच्युं छे ते निश्चित एवा जगत्तत्त्वने प्रकाश करवामां दीपकसमान आ काव्यमां स्वभावे ज सुभग एवो आ बत्रीशमो सर्ग संपूर्ण थयो. ( ११२५ )

इतिश्री

## गणधरो संबंधी यंत्र.

| वीरप्रभुशिष्य | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | सुधर्माशिष्य. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| गणधरनाम | इंद्रभूति | अग्नि भूति | वायुभूति | व्यक्त | सुधर्मा | मंडित पुत्र | मौर्यपुत्र | अकंपित | अचल भ्राता | मेतार्य | प्रभास | जंबूकुमार |
| नगरनाम | गोबर | गोबर | गोबर | कोल्लाक सं. | कोल्लाक सं. | मौर्य सं. | मौर्य सं. | मिथिला | कोशला | तुंगीक सं | राजगृह | राजगृहनगर |
| पितानाम | वसुभूति | वसुभूति | वसुभूति | धनमित्र | धम्मिल | धनदेव | मौर्य | देव | वसु | दत्त | बल | ऋषभदत्त |
| मातानाम | पृथ्वी | पृथ्वी | पृथ्वी | वारुणी | भद्दिला | विजया | विजया | जयंती | नंदा | वरुणदेवी | अतिभद्रा | धारिणी |
| जन्मनक्षत्र | ज्येष्ठा | कृत्तिका | स्वाति | श्रवण | उत्तरा फाल्गुनी | मघा | रोहिणी | उत्तरा षाढा | मृगशीर्ष | अश्विनी | पुष्य | — |
| गृहस्थपर्यायो | ५० | ४६ | ४२ | ५० | ५० | ५३ | ६५ | ४८ | ४६ | ३६ | १६ | १६ |
| छद्मस्थपर्यायो | ३० | १२ | १० | १२ | ४२ | १४ | १४ | ९ | १२ | १० | ८ | २० |
| केवलीपर्यायो | १२ | १६ | १८ | १८ | ८ | १६ | १६ | २१ | १४ | १६ | १६ | ४४ |
| सर्वायु | ९२ | ७४ | ७० | ८० | १०० | ८३ | ९५ | ७८ | ७२ | ६२ | ४० | ८० |
| शिष्यपरिवार | ५०० | ५०० | ५०० | ५०० | ५०० | ३५० | ३५० | ३०० | ३०० | ३०० | ३०० | ५०० |
| गोत्र | गौतम | गौतम | गौतम | भारद्वाज | अग्नि-वेश्य | वाशिष्ठ | काश्यप | गौतम | हारिता यन | कोडीन | कोडीन | काश्यप |

## चोवीशे तीर्थंकरना मुनिओ संबंधी यंत्र.

| अंक | प्रभुनाम. | गणधर | केवली | मनःपर्यवी | अवधिज्ञानी | चौदपूर्वी | वैक्रियलब्धि वाला | वादी | सातनो सरवालो | सामान्यमुनि | कुलमुनि संख्या. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ऋषभदेव | ८४ | २०००० | १२७५० | ९००० | ४७५० | २०६०० | १२६५० | ७९८३४ | ४१६६ | ८४००० |
| २ | अजितनाथ | ९५ | २०००० | १२५०० | ९४०० | ३७२० | २०४०० | १२४०० | ७८५१५ | २१४८५ | १००००० |
| ३ | संभवनाथ | १०२ | १५००० | १२१५० | ९६०० | २१५० | १९८०० | १२००० | ७०८०२ | १२९१९८ | २००००० |
| ४ | अभिनंदन | ११६ | १४००० | ११६५० | ९८०० | १५०० | १९००० | ११००० | ६७०६६ | २३२९३४ | १००००० |
| ५ | सुमति | १०० | १३००० | १०४५० | ११००० | २४०० | १८४०० | १०४५० | ६५८०० | २५४२०० | ३२०००० |
| ६ | पद्मप्रभ | १०७ | १२००० | १०३०० | १०००० | २३०० | १६१०८ | ९६०० | ६०४१५ | २६९५८५ | ३३०००० |
| ७ | सुपार्श्व | ९५ | ११००० | ९१५० | ९००० | २०३० | १५३०० | ८४०० | ५४९७५ | २४५०७५ | ३३०००० |
| ८ | चंद्रप्रभ | ९३ | १०००० | ८००० | ८००० | २००० | १४००० | ७६०० | ४९६९३ | २००३०७ | २५०००० |
| ९ | सुविधि | ८८ | ७५०० | ७५०० | ८४०० | १५०० | १३००० | ६००० | ४३९८८ | १५६०१२ | २००००० |
| १० | शीतल | ८१ | ७००० | ७५०० | ७२०० | १४०० | १२००० | ५८०० | ४०९८१ | ५९०१९ | १००००० |
| ११ | श्रेयांस | ७६ | ६५०० | ६००० | ६००० | १३०० | ११००० | ५००० | ३५८७६ | ४८१२४ | ८४००० |
| १२ | वासुपूज्य | ६६ | ६००० | ६००० | ५४०० | १२०० | १०००० | ४७०० | ३३३६६ | ३८६३४ | ७२००० |
| १३ | विमल | ५७ | ५५०० | ५५०० | ४८०० | ११०० | ९००० | ३२०० | २९१५७ | ३८८४३ | ६८००० |
| १४ | अनंत | ५० | ५००० | ५००० | ४३०० | १००० | ८००० | ३२०० | २६५५० | ३९४५० | ६६००० |
| १५ | धर्म | ४३ | ४५०० | ४५०० | ३६०० | ९०० | ७००० | २८०० | २३३४३ | ४०६५७ | ६४००० |
| १६ | शांति | ३६ | ४३०० | ४००० | ३००० | ८०० | ६००० | २४०० | २०५३६ | ४१४६४ | ६२००० |
| १७ | कुंथु | ३५ | ३२०० | ३३४० | २५०० | ६७० | ५१०० | २००० | १६८४५ | ४३१५५ | ६०००० |
| १८ | अर | ३३ | २८०० | २५५१ | २६०० | ६१० | ७३०० | १६०० | १७४९४ | ३२५०६ | ५०००० |

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १९ | मल्लि | २८ | २२०० | १७५० | २२०० | ६६८ | २९०० | १४०० | १११४६ | २८८५४ | ४०००० |
| २० | मुनिसुव्रत | १८ | १८०० | १५०० | १८०० | ५०० | २००० | १२०० | ८८१८ | २११८२ | ३०००० |
| २१ | नमि | १७ | १६०० | १२५० | १६०० | ४५० | ५००० | १००० | १०६१७ | ९०८३ | २०००० |
| २२ | नेमि | ११ | १५०० | १००० | १५०० | ४०० | १५०० | ८०० | ६७११ | ११२८६ | १८००० |
| २३ | पार्श्व | १० | १००० | ७५० | १४०० | ३५० | ११०० | ६०० | ५२१० | १०७६० | १६००० |
| २४ | महावीर | ११ | ७०० | ५०० | १३०० | ३०० | ७०० | ४०० | ३९११ | १००८६ | १४००० |
| कुल | | १४५२ | १७६१०० | १४५५११ | १३३४०० | ३३११८ | २४५२०८ | १२६२०० | ८६१६४९ | ११८६०५१ | २८४८००० |

वादी मुनिओनी संख्या लोकप्रकाशकारे विमळनाथजीनी ३६०० लखेली ते प्रमाणे गणतां संख्यामां ४०० वध-वाथी श्री प्रवचनसारोद्धार सटीकमां तपासतां तेना टीकाकारे स्पष्टपणे त्रण हजार ने बसो कह्या छे, परंतु दृष्टिदोषना कारणथी तेना मूळमां ब नो छ थइ गयेल जणाय छे. ते उपरथी आ ग्रंथमां पण विमळनाथ चरित्रमां ३६०० लखायेला जणाय छे. श्रीसत्तरीसयस्थान प्रकरणमां ने तेना यंत्रमां पण आ ज कारणथी ३६०० लखायेला परंतु सरवाळो बधा ग्रंथोमां १२६२०० नो ज होवाथी ३२०० बराबर लागे छे. ज्ञानपंचमीनी बुकमां ज्ञानपंचमीना देवना अर्थनी नोटमां वे त्रण संख्यामां जुदी संख्या लखी छे ने अरनाथना मूलथी १६०० ना १५०० लख्या छे ते प्रसंगे लख्युं छे.

## श्रीमान् तीर्थंकर, चक्रवर्ती, वासुदेव विगेरेनुं क्रमसूचक यंत्र.

| अंक | तीर्थंकर. | चक्रवर्ती. | वासुदेव. | बळदेव. | प्रतिवासुदेव. |
|---|---|---|---|---|---|
| १ | ऋषभदेव | भरत १ | | | |
| २ | अजितनाथ | सगर २ | | | |
| ३ | संभवनाथ | | | | |
| ४ | अभिनंदन | | | | |
| ५ | सुमतिनाथ | | | | |
| ६ | पद्मप्रभ | | | | |
| ७ | सुपार्श्वनाथ | | | | |
| ८ | चंद्रप्रभ | | | | |
| ९ | सुविधिनाथ | | | | |
| १० | शीतळनाथ | | | | |
| ११ | श्रेयांसनाथ | | त्रिपृष्ठ १ | अचळ १ | अश्वग्रीव १ |
| १२ | वासुपूज्य | | द्विपृष्ठ २ | विजय २ | तारक २ |
| १३ | विमळनाथ | | स्वयंभू ३ | भद्र ३ | मेरक ३ |
| १४ | अनंतनाथ | | पुरुषोत्तम ४ | सुप्रभ ४ | मधु ४ |
| १५ | धर्मनाथ | | पुरुषसिंह ५ | सुदर्शन ५ | निशुंभ ५ |
| | | मघवा ३ | | | |
| | | सनत्कुमार ४ | | | |
| १६ | शांतिनाथ | शांतिनाथ ५ | | | |

| | | | | | |
|---|---|---|---|---|---|
| १७ | कुंथुनाथ | कुंथुनाथ ६ | | | |
| १८ | अरनाथ | अरनाथ ७ | | | |
| | | | पुरुषपुंडरीक ६ | आनंद ६ | बालि ६ |
| | | सुभूम ८ | | | |
| | | | नंदन ७ | दत्त ७ | प्रह्लाद ७ |
| १९ | मल्लिनाथ | | | | |
| २० | मुनिसुव्रत | | | | |
| | | महापद्म ९ | | | |
| | | | लक्ष्मण ८ | रामचंद्र ८ | रावण ८ |
| २१ | नमिनाथ | | | | |
| | | हरिषेण १० | | | |
| | | जय ११ | | | |
| २२ | नेमिनाथ | | कृष्ण ९ | बळभद्र ९ | जरासंध ९ |
| | | ब्रह्मदत्त १२ | | | |
| २३ | पार्श्वनाथ | | | | |
| २४ | महावीरस्वामी | | | | |

१ जे तीर्थंकरनी लाइनमां चक्री के वासुदेवादि लख्या छे ते तेमना विचरता वखतमां थयेला समजवा अने जे नीचे जुदा स्थानामां लख्या छे ते तेमनुं शासन वर्तता थयेला समजवा.

## ॥ अथ त्रयस्त्रिंशत्तमः सर्गः प्रारभ्यते ॥

तथास्यामवसर्पिण्यां प्रथमश्चक्रवर्त्तिपु । अभूद्भरत इत्यादि–देवस्य तनुजोऽग्रिमः ॥ १ ॥ सुमंगलाकुक्षिरत्नं पंचचापशतोच्छ्रितः । स्वर्णरुक् चतुरशीति–पूर्वलक्षसुजीवितः ॥ २ ॥ साधिताशेषषट्खंडः स चादर्शगृहेऽन्यदा । निरंगुलीयकां पश्य–न्नंगुलीं पर्यभावयत् ॥३॥ शरीरासारतां द्राक् च लेभे केवलमुज्ज्वलं । प्रदत्तसाधुवेषश्च शक्रेणागत्य वंदितः ॥ ४ ॥ सहस्रैर्दशभी राज्ञां सेवितः स्वीकृतव्रतैः । विहृत्य लक्षं पूर्वाणामवाप परमं पदं ॥ ५ ॥ इति भरतः ॥

अयोध्यायां नगर्यां च द्वितीयश्चक्रवर्त्यभूत् । स्वर्णवर्णः सार्द्धचतु–र्धनुःशतसमुच्छ्रितः ॥ ६ ॥ द्वासप्ततिपूर्वलक्ष–जीवितः सगराह्वयः । सुमित्रविजयक्ष्माप–यशोमत्योस्तनूद्भवः ॥ ७ ॥ अजितस्यार्हतश्चासौ पितृव्यतनयोऽभवत् । यतः सुमित्रविजयो

---

## सर्ग ३३ मो.

आ अवसर्पिणीमां प्रथमजिनेश्वरना मोटा पुत्र भरत, चक्रवर्तीओमां प्रथम थया. ( १ ) ते सुमंगलादेवीनी कुक्षिमां रत्नसमान, पांच सो धनुष्य उंचा देहवाळा, सुवर्णसमान कांतिवाळा अने ८४ लाख पूर्वना आयुवाळा हता. ( २ ) समस्त छ खंड साध्या पछी एकदा आदर्शभुवनमां हता ते वखते हाथनी एक अंगुळी मुद्रिकाविनानी देखतां तेमणे शरीरनी असारता भावी अने तरत ज उज्ज्वळ केवळज्ञान पाम्या. शक्रेंद्रे आवीने मुनिवेष आप्यो अने ( ते धारण कर्या पछी ) वांद्या. ( ३–४ ) चारित्रने स्वीकारेला एवा दश हजार राजाओथी सेवाता ते एक लाख पूर्वसुधी पृथ्वीपर विचरीने परमपदने पाम्या. ( ५ ) इति भरतः १.

बीजा चक्रवर्ती सगर नामना अयोध्या नगरीमां थया. ते सुवर्णसमान देहना वर्णवाळा, साडाचार सो धनुष्यनी उंचाइवाळा, ७२ लाख पूर्वना आयुवाळा अने सुमित्रविजय राजा तथा यशोमतीना पुत्र हता. ( ६–७ ) ए अजितनाथजीना काकाना पुत्र हता, कारणके सुमित्रविजयनो जितशत्रु राजा सहोदर हतो. ( ८ ) ते पण पोताना

जितशत्रुश्च सोदरौ ॥ ८ ॥ सोऽपि स्वपुत्रमरण–प्राप्तवैराग्यवासनः। अजितस्यार्हतः पार्श्वे परिव्रज्य शिवं ययौ ॥ ९ ॥ इति सगरः ॥

अभून्नगर्यां श्रावस्त्यां समुद्रविजयो नृपः। भद्रा प्रियतमा तस्य मघवा तनयस्तयोः ॥ १० ॥ द्विचत्वारिंशदध्यर्द्धा धनुर्षा वपुरुच्छ्रयः। लक्षाणि पंचवर्षाणा–मायुष्कं चास्य कीर्त्तितं ॥ ११ ॥ संसारानित्यतां ध्यायन् जातवैराग्यवासनः। सोऽगादगृहीतचारित्रः स्वर्गलोकं तृतीयकं ॥ १२ ॥ इति मघवा ॥

कुरुजंगलदेशे च हस्तिनागपुरे पुरे। कुरुवंशे महीशोऽभू–दश्वसेनाह्वयो महान् ॥ १३ ॥ सहदेवी च तद्भार्या शीलसौभाग्यशालिनी सनत्कुमारस्तत्पुत्र–श्चतुर्थश्चक्रवर्त्यभूत् ॥ १४ ॥ अद्वयर्द्धान्येकचत्वारिं–शद्धनूंषि स उच्छ्रितः। तथा त्रिवर्षलक्षायु–र्जगदुत्कृष्टरूपवान् ॥ १५ ॥ तस्मिन्नवसरे कोऽपि सौधर्मेंद्रस्य पर्षदि। ईशानस्वर्गवास्तव्यः संगमाख्यः सुरोऽविशत् ॥ १६ ॥ तत्तेजसा सुराः सर्वे प्रत्यूपे तारका इव। तार्किका इव वा जैने बभूवुर्गततेजसः ॥ १७ ॥ गते तस्मिन् सुरैः सर्वैः पृष्टः

---

पुत्रोना मरणथी वैराग्य वासनाने पामीने अजितनाथपासे प्रव्रज्या अंगीकार करी मोक्षे गया. ( ९ ) इति सगरः २.

श्रावस्तिनगरीमां समुद्रविजय नामे राजा हता. तेने भद्रा नामे प्रियतमा हती. तेमना मघवा नामे पुत्र ( त्रीजा चक्रवर्त्ती ) थया. ( १० ) तेमनुं देहमान ४२॥ धनुष्यनुं ने आयुष्य पांच लाख वर्षनुं हतुं. ( ११ ) संसारनी अनित्यता ध्यातां वैराग्यवासना उत्पन्न थवाथी तेमणे चारित्र अंगीकार कर्युं अने मरण पामीने त्रीजे देवलोके देव थया. ( १२ ) इति मघवा. ३.

कुरुजंगल देशमां हस्तिनागपुर नगरमां कुरुवंशमां अश्वसेन नामना महान् राजा थया. ( १३ ) तेने शील सौभाग्यशाळी सहदेवी नामे भार्या हती. तेना पुत्र सनत्कुमार नामे चोथा चक्री थया. ( १४ ) तेमना देहनी उंचाइ ४१॥ धनुष्यनी हती अने त्रण लाख वर्षनुं आयु हतुं. जगतमां उत्कृष्ट रूपवाळा हता. ( १५ ) ते अवसरे सौधर्मेंद्रनी सभामां ईशानस्वर्गवासी कोइ संगम नामनो देव कार्यप्रसंगे आव्यो. ( १६ ) तेना तेजथी सर्वे सौधर्मकल्पवासी देवो प्रभाते तारानी जेवा अने जैननी पासे तार्किकोनी जेवा तेजविनाना थइ गया. ( १७ ) ते देवना गया पछी सर्वे देवोए सौधर्मेंद्रने

सौधर्मनायकः । जगावयं भवे पूर्वे भावितात्माभवन्मुनिः ॥ १८ ॥ आचामाम्लवर्द्धमानं तत्राकार्षीत्तपो महत् । तेजस्तदनुभावेन् विभर्त्त्ययमनुत्तरं ॥ १९ ॥ स्वामिन्नन्यस्य कस्यापि रूपमस्त्यधुनेदृशं । इति पृष्टः सुराधीशः शशंसैवमसंशयः ॥२०॥ रूपं सनत्कुमारस्य वर्त्तते चक्रवर्त्तिनः । देवेभ्योऽप्यधिकं नास्मा–दृशां वचनगोचरः ॥ २१ ॥ अश्रद्दधानौ तत्कौचि–द्विप्रीभूयागतौ सुरौ । रूपं दिदृक्षू चक्री च तदासीत्स्नानवेश्मनि ॥ २२ ॥ अभ्यक्तस्त्यक्तशृंगारो रूपमालोक्य विस्मितौ । तौ प्रत्युवाच द्रष्टव्यं रूपं मयि सभास्थिते ॥ २३ ॥ ततः स्नातोऽलंकृतश्च दृष्टः सिंहासने स्थितः । ताभ्यां विषण्णचित्ताभ्यां तेन पृष्टे च कारणे ॥२४॥ रोगोत्पत्तिं जगदतु–स्ततः स्वीकृत्य संयमं । सहते स्म गदान् सप्त सप्तवर्षशतावधि ॥ २५ ॥ तथोक्तं योगशास्त्रवृत्तौ–कच्छू १ शोष २ ज्वर ३ श्वासा ४–रुचि ५ कुक्ष्य ६ क्षिवेदनाः ७ । सप्ताधिसेहे पुण्यात्मा सप्त

---

पूछ्युं के—' आनुं आवुं अत्यंत तेज केम छे ? ' इंद्रे कह्युं के—' पूर्वभवे ए भावितात्मा मुनि हता. ( १८ ) ते भवमां तेमणे मोटो आचामाम्लवर्धमानतप कर्यो हतो तेना प्रभावथी ए देव अनुत्तर तेजने पामेल छे. ' ( १९ ) फरी देवोए पूछ्युं के—' अत्यारे आवुं अपूर्व तेज बीजा कोइनुं छे ? ' आ प्रमाणे इंद्रने पूछवाथी इंद्रे निःशंसयपणे कह्युं ( २० ) के—' हाल सनत्कुमार चक्रीनुं रूप देवो करतां पण अधिक छे, ते अमारे वचनगोचर पण थइ शके तेम नथी अर्थात् अमे पण ते रूपनुं वर्णन करी शकीए तेम नथी. ' ( २१ ) आ प्रमाणे इंद्रना वचनने नहीं सद्दहीने कोइ बे देव विप्रनुं रूप करी चक्रीपासे तेमनुं रूप जोवा आव्या. ते वखते चक्री स्नानगृहमां हता. ( २२ ) अभ्यंगन करावेलुं हतुं ने शृंगार तजी दीधेला हता. ते वखते तेमनुं रूप जोइने ते आवेल देवो विस्मय पाम्या. तेमने चक्रीए कह्युं के–' मारुं रूप तो हुं सभामां बेठो होउं त्यारे जोवुं. ' ( २३ ) पछी चक्री स्नान करी वस्त्रालंकार धारण करी सभामां आवीने बेठा. एटले ते बे विप्रो पण आव्या. तेमने आ वखतनुं रूप जोइने विषण्णचित्तवाळा थयेला जोइने चक्रीए कारण पूछ्युं. ( २४) एटले तेमणे शरीरमां रोगोत्पत्ति थइ गयानुं कह्युं, तेथी वैराग्य पामीने ते चक्रीए चारित्र ग्रहण कर्युं अने सात महाव्याधिओ सात सो वर्षसुधी सहन कर्या. ( २५ ) श्री योगशास्त्रनी वृत्तिमां कह्युं छे के–' कच्छु १, शोष २, ज्वर ३, श्वास ४, अरुचि ५, कुक्षिवेदना ६, अक्षिवेदना ७ आ सात व्याधि ते पुण्या-

वर्षशतानि सः ॥ २६ ॥ उत्तराध्ययनवृत्तेरयमेवाभिप्रायः, ऋषिमंडले तु–कंडू १ अभत्तसद्धा २ तिव्वा वेअणा उ अच्छि ३ कुच्छीसु ४ । कासं ५ सासं च ६ जरं ७ अहियासइ सत्त वाससए ॥ १ ॥ मरणसमाधिप्रकीर्णके तु–सोलस रोगायंका सहिया सह चक्किणा चउत्थेण । वाससहस्सा सत्त उ सामन्नधुरं उवगएणं ॥ १ ॥ सप्तवर्षसहस्राण्यष्टादश रोगानधिसह्येति तु उत्तराध्यनदीपिकायां. शक्रप्रशंसाऽश्रद्धाना–त्पुनर्देवैः परीक्षितः। प्राप्तश्चिकित्सानाकांक्षी तृतीयं स्वर्गमुत्तमः ॥ २७॥ इति सनत्कुमारः ॥

श्रीशांतिः पंचमश्चक्री षष्ठः कुंथुजिनेश्वरः । अरोऽर्हन् सप्तमस्तेषां चरितं प्राग्निरूपितं ॥ २८ ॥

हास्तिनाख्ये पुरेऽनंत–वीर्योऽभूत्पृथिवीपतिः । रेणुकायाः स्वसा तस्य प्रियाभूज्जितशत्रुजा ॥ २९ ॥ तस्मिन्नवसरे दुःस्थो विप्रो व्युच्छिन्नवंशकः । अग्निनामा भ्रमन् प्राप तापसाश्रममेकदा ॥ ३० ॥ सुतत्वेनाग्रहीदग्निं जमः कुलपतिश्च तं । ततः स जमदग्न्याख्य–स्तापसोऽभूनमहा-

---

त्माए सात सो वर्ष सुधी सहन कर्या. ( २६ ) श्री उत्तराध्ययनवृत्तिनो पण आ अभिप्राय छे. ऋषिमंडळमां तो–कंडु १, अभक्तश्रद्धा–अरुचि २, तीव्र आंखवेदना ३, तीव्र कुक्षिवेदना ४, कास ५, श्वास ६ ने ज्वर ७–आ व्याधिओ सात सो वर्षसुधी सहन कर्या'. एम कहेल छे. वळी मरणसमाधिप्रकीर्णकमां ' श्रमणपणानी धुराने प्राप्त थयेला चोथा चक्रीए सात हजार वर्ष सुधी सोळ रोगांतक ( महारोग ) सहन कर्या '–एम कहेल छे. श्री उत्तराध्ययननी दीपिकामां तो ' सात हजार वर्षसुधी अढार रोगने सहन कर्या ' एम कह्युं छे. फरीने पाछी इंद्रे चक्रीनी प्रशंसा करी तेने नहीं सद्दहीने आवेला देवे कोइ पण प्रकारनी व्याधिनी चिकित्साने ते चक्री इच्छता नथी ए बाबतनी परीक्षा करी. ते चक्री मृत्यु पामीने त्रीजा स्वर्गमां उत्पन्न थया. ( २७ ) इति सनत्कुमारः ४

श्री शांतिनाथ पांचमा चक्री, श्री कुंथुनाथ छट्ठा चक्री अने श्री अरनाथ सातमा चक्री थया. तेमनुं चारित्र पूर्वे निरूपण करेल छे. ( २८ ) ५–६–७

हस्तिनापुर नामना नगरमां अनंतवीर्य नामे राजा थया. जितशत्रु राजानी पुत्री रेणुकानी बहेन तेनी राणी थइ. ( २९ ) ते अवसरे अग्नि नामनो दुःखी अने व्युच्छिन्न वंशवाळो विप्र एकदा भमतो भमतो कोइ तापसना आश्रममां आव्यो. ( ३० ) त्यांना

तपाः ॥ ३१ ॥ जैनशैवौ तदा वैश्वा–नरधन्वंतरी सुरौ । विवदंतौ नृलोकं चा–गतौ धर्मं परीक्षितुं ॥ ३२ ॥ परीक्षणीयो जैनेषु प्रथमं दृश्यतेऽत्र यः । परीक्ष्यस्तापसप्रष्ठः शैवेष्वित्यत्र संगरः ॥ ३३ ॥ तदा भावयतिः पद्म–रथाख्यो मिथिलापतिः । गुरुश्रीवासुपूज्यांते गच्छन् व्रतजिघृक्षया ॥३४॥ प्रातिलोमानुलोमाभ्या–मुपायैर्विविधैरसौ । परीक्षितो न चुक्षोभ पवनैरिव मंदरः ॥ ३५ ॥ अगातां तौ ततो देवौ जमदग्निं परीक्षितुं । चटकौ दंपती भूत्वा तस्य श्मश्रुण्यतिष्ठतां ॥ ३६ ॥ अनुमन्यस्व मां कांते गत्वाऽयामि हिमालयं । इत्यूचिवांसं चटकं चटकाथैवमब्रवीत् ॥३७॥ द्रुतं नैति भवानन्य–कांतासक्तः स्वभावतः । लंपटानां कुतो मोक्षः–परस्त्रीनागपाशतः ॥ ३८ ॥ स स्माहावश्यमेष्यामि न चेद्गोघातपातकैः । गृह्येऽथवा विनश्यामि पापैर्विश्वस्तघातिनां ॥ ३९ ॥ चटकोचे प्रियालीकैः पर्याप्तं शपथांतरैः । तापसस्यास्य पापेन गृह्येऽहमिति शप्यतां ॥ ४० ॥ ततः स तापसः क्रुद्धः खगौ धृत्वा करेण तौ । उवाच

कुलपति जमे ते अग्निने पुत्रपणे ग्रहण कर्यो. त्यारथी ते जमदग्नि नामनो महातप करनारो तपस्वी थयो. ( ३१ ) जैनधर्मी ने शैवधर्मी एवा वैश्वानर ने धन्वंतरी नामना बे देवो परस्पर वाद करता धर्मनी परीक्षा करवा माटे मनुष्यलोकमां आव्या. ( ३२ ) जैनमां जे प्रथम एटले धर्मनी शरुआतवाळो देखाय तेनी परीक्षा करवी अने पछी शैवधर्मी तापसमां जे श्रेष्ठ गणातो होय तेनी परीक्षा करवी एवो निर्णय कर्यो. ( ३३ ) ते वखते भावयति एवो मिथिलापति पद्मरथ नामनो राजा श्रीवासुपूज्य गुरुनी पासे व्रत लेवानी इच्छाथी जतो हतो. ( ३४ ) तेनी ते देवोए अनुलोम–प्रतिलोम एवा विविध उपायोवडे परीक्षा करी, पण ते पवनवडे मेरुपर्वत चलित न थाय तेम चलित थया नहीं. ( ३५ ) पछी ते देवो जमदग्निनी परीक्षा करवा गया अने चकला चकलीनुं रूप करी तेनी दाढीमां रह्या. ( ३६ ) तेमांथी चकलो बोल्यो के–' हे कांता ! मने रजा आप. हुं हिमालय जइने पाछो तरत आवीश' आम कहेता चकलाने चकलीए कह्युं (३७) के–' स्वभावथी ज अन्य कांतामां आसक्त एवा तमे उतावळा पाछा न आवो, केमके लंपटो परस्त्रीरूपी नागपाशमांथी शी रीते छुटी शके ? ' ( ३८ ) एटले चकलो बोल्यो के–'हुं अवश्य आवीश. जो न आवुं तो गौहत्यानुं पातक मने लागे अथवा विश्वासघातीना पापथी मारो विनाश थाय.' (३९) त्यारे चकली बोली के–'हे प्रिय ! बीजा सोगन लेवाथी सर्युं. आ तापसनुं पाप मने लागे एवा सोगन खाओ.' ( ४० ) आ प्रमाणे सांभळीने ते तापस क्रोधायमान थयो अने बंने

मयि किं पाप—मीदृगाजन्म सुव्रते ॥ ४१ ॥ ऊचतुस्तौ खगौ पापं पापर्षे किमतः परं । अनुत्पादितपुत्रेण यत्त्वया चर्यते तपः ॥ ४२ ॥ ततो भ्रष्ट-मनाः सोऽभू—त्स्त्रीपाणिग्रहणोत्सुकः । मिथ्यादर्शो हि वैराग्यं कुलटाचि-त्तचंचलं ॥ ४३ ॥ अखिद्यत सुरो धन्वं—तरिस्तं वीक्ष्य तादृशं । 'किमे-भिस्तापसैर्मूढै—रित्यभूदयमार्हतः ॥ ४४ ॥

भूरिकन्यं ययाचेऽसौ जितशत्रुमृषिर्नृपं । त्वामिच्छंतीं ददामीति सोऽवादीच्छापभीरुकः ॥ ४५ ॥ क्षामं भिक्षाचरं वीक्ष्य निखिलाः कृत-थूत्कृतीः । कुब्जीचक्रेऽसकौ शापा—देकोनं कन्यकाशतं ॥ ४६ ॥ रेणु-क्रीडापरां लघ्वीं रेणुकानामकन्यकां । फलैः प्रलोभ्य मामेषा वृणोती-त्यवदन्नृपं ॥ ४७ ॥ नृपेण दत्तामादाय तां प्रसन्नः परा अपि । ऋजुः कन्याः पटूकृत्य वने नीत्वा पुपोष तां ॥ ४८ ॥ तातवत्परिपोष्यापि

---

पक्षीने हाथवडे पकडी कह्युं के—' जन्मथी मांडीने व्रतधारी एवा मारामां शुं एवुं पाप छे के चकलीए ए पाप लेवानुं कह्युं ? ' ( ४१ ) एटले ते बंने पक्षी बोल्या के—' हे पापर्षि ! आथी वधारे पाप क्युं छे के तमे पुत्रोत्पत्ति कर्या सिवाय तप तपो छो ? ' ( ४२ ) आ प्रमाणे पक्षीओना वचनो सांभळी तापसनुं मन चलित थयुं अने ते कोइ पण स्त्रीसाथे पाणिग्रहण करवाने उत्सुक थयो, कारण के मिथ्यात्वीनो वैराग्य कुल-टाना चित्त जेवो चंचळ होय छे. ( ४३ ) जमदग्निनी आ प्रमाणे स्थिति जोइने धन्वंतरी देव खेद पाम्यो अने विचार्युं के—' आ मूढ एवा तापसोथी शुं ? अर्थात् एओमां वास्तविक धर्म जणातो नथी ' आम विचारीने ते श्रावक थयो. ( पछी बंने देव स्वर्गे गया ). (४४)

अहीं जमदग्निए घणी कन्यावाळा जितशत्रु राजा पासे जइने एक कन्यानी मागणी करी एटले तेना शापथी भय पामता राजाए कह्युं के—' जे कन्या तमने इच्छशे ते आपीश. ' ( ४५ ) परंतु आ दुर्बळ भिक्षाचरने जोइने बधी कन्याओए थुथुकार कर्यो एटले ए तापसे एक ऊणी सो ( ९९ ) कन्याओने शापवडे कुबडी करी दीधी. ( ४६ ) पछी धूळमां क्रीडा करती सौथी नानी रेणुका नामनी कन्याने फळवडे लोभावीने आ मने इच्छे छे एम तेणे राजाने कह्युं. ( ४७ ) एटले राजाए तेने आपी. तेने लइने प्रसन्न थयेला ते तापसे कुबडी करेली बधी कन्याओने पाछी यथास्वरूप करी अने रेणुकाने लइने ते वनमां—पोताना आश्रममां आव्यो. त्यां ते तेनुं पोषण करवा लाग्यो. ( ४८ ) पितानी जेम परिपालन कर्या छतां कामने वश एवो अने अंगो

सोऽथ कामवशंवदः । जरन्नरीरमद्बालां श्लथांगोऽप्यश्लथस्पृहः ॥ ४९ ॥ ऋतुकालेऽथ तेनोक्ता सा बाला त्वत्कृते चरुं । साधयामि यतस्ते स्या–न्नंदनो ब्राह्मणोत्तमः ॥ ५० ॥ सावग् द्वौ साधय चरू तत्र ब्राह्मः कृते मम । अन्यः क्षात्रोऽनंतवीर्य–प्रियाया मत्स्वसुः कृते ॥ ५१ ॥ साधितौ द्वौ चरू तेन ब्राह्मक्षत्रमहोनिधी । ततः साऽचिंतयच्चित्ते रेणुका दीर्घया दृशा ॥ ५२ ॥ मा भूत्सुतोऽपि मे मद्व–दारण्यो हरिणादिवत् । ध्यात्वेति स्वयमादत्ता क्षात्रतेजःकरं चरुं ॥ ५३ ॥ द्वितीयं चापरा तेन जातौ कुलविलक्षणौ । रामः पुत्रो रेणुकायाः परस्याः कृतवीर्यकः ॥ ५४ ॥

कोऽपि विद्याधरो भ्रष्ट–नभोगतिरुपासितः । रामेण विद्या तद्दत्ता पार्शवी साधिता क्रमात् ॥ ५५ ॥ स्वसृप्रेम्णान्यदा चागा–द्रेणुका हस्तिनापुरे । भुक्ता चानंतवीर्येण श्याली जातसुताप्यभूत् ॥ ५६ ॥ ससुतामपि तां निन्ये जमदग्निर्निजं गृहं । क्रुद्धश्च पर्शुरामस्तां सडिंभां मातरं न्यहन् ॥ ५७ ॥ तद्भगिन्योदितं पत्ये क्रुद्धोऽथानंतवीर्यराट् ।

---

शिथिल थयेल छतां जेनी स्पृहा शिथिल थइ नथी एवो ते वृद्ध तापस ते बाळानी साथे कामक्रीडा करवा लाग्यो. ( ४९ ) अन्यदा ऋतुकाळे तापसे ते बाळाने कह्युं के– 'तारे माटे एक चरु साधुं के जेथी तने ब्राह्मणोत्तम पुत्र थाय.' ( ५० ) एटले ते रेणुका बोली के 'तमे बे चरु साधो, तेमां ब्राह्मचरु मारे माटे अने क्षात्रचरु अनंतवीर्यनी प्रिया मारी बहेनने माटे.' ( ५१ ) आम कहेवाथी तेणे ब्राह्म अने क्षत्रना तेजना निधान समान बे चरु साध्या. ए वखते रेणुका दीर्घदृष्टिथी विचारवा लागी ( ५२ ) के–' मारो पुत्र पण मारी जेम वनमां रहेनारो हरिणादिक जेवो न थाओ ' आम विचारीने क्षात्रतेज करनार चरु पोते ग्रहण कर्यो ( ५३ ) अने बीजो पोतानी बहेनने आप्यो तेथी कुळमां विलक्षण एवा बंनेने पुत्र थया. रेणुकानो पुत्र राम नामनो थयो अने तेनी बहेनने कृतवीर्य नामनो पुत्र थयो. ( ५४ )

अन्यदा कोइ विद्याधर आकाशगमन करतां भ्रष्ट थयेलो भूमिपर पडेलो तेनी रामे सारी रीते उपासना ( चाकरी ) करी, तेथी तेणे रामने पार्शवी ( परशु संबंधी ) विद्या आपी. तेणे अनुक्रमे ते विद्या साधी. ( ५५ ) बहेनना प्रेमथी अन्यदा रेणुका हस्तिनापुरमां आवी. त्यां अनंतवीर्ये ते श्याळीने भोगवी अने तेने पुत्र पण थयो. ( ५६ ) जमदग्नि पुत्रसहित तेने पोताना आश्रममां लइ गयो. तेने जोइ क्रोध पामेला परशुरामे पुत्रसहित माताने हणी नाखी. ( ५७ ) आ वात रेणुकानी बहेने पोताना पति अनंत-

ीडनार्थं गते रामे द्राग्ममर्द तदाश्रमं ॥ ५८ ॥ ततश्च पर्शुरामेणा–नंतवीर्यो निपातितः । कृतवीर्यस्ततस्तस्य पदेऽभूत्पृथिवीपतिः ॥ ५९ ॥ तेन क्रुद्धेन नीतश्च जमदग्निर्यमालयं । रिपोस्ताते हते स्वस्य तातदुःखं हि शाम्यति ॥ ६० ॥

ततश्च पर्शुरामेण प्रज्ज्वलत्पर्शुतेजसा । कृतवीर्यः क्षयं नीतो निखिलैः क्षत्रियैः सह ॥ ६१ ॥ कृतवीर्यप्रिया तारा ततो गुर्वी पलायिता । कृपया तापसैस्त्राता स्वाश्रमे भूमिवेश्मनि ॥ ६२ ॥ क्रमाच्चतुर्दशस्वप्न–सूचितोऽस्याः सुतोऽभवत् । चखाद् भूमिमित्युक्तः सुभूम इति तापसैः ॥ ६३ ॥

हस्तिनापुरसाम्राज्यं रामः स्वीकृत्य भूतलं । निःक्षत्रियं सप्तवारां–श्चकार क्रोधदुर्धरः ॥ ६४ ॥ अन्यदा क्षत्रियान्वेषी सुभूमालंकृताश्रमे । जगाम रामस्तत्रास्य जज्वाल परशुः क्रुधा ॥ ६५ ॥ कोऽप्यत्र क्षत्रियोऽस्तीति पृष्टः कुलपतिर्जगौ । तापसाः क्षत्रियाः संती–त्युक्तेऽसौ व्यरम-

---

वीर्यने करी एटले क्रोधायमान थयेला तेणे राम क्रीडा करवा माटे बहार गयेल ते वखते त्यां जइने तत्काळ तेनो आश्रम तोडीफोडी नाख्यो. (५८) ए वात जाणीने पर्शुरामे अनंतवीर्यने मारी नाख्यो एटले तेने स्थानके कृतवीर्य पृथ्वीपति (राजा) थयो. (५९) ते कृतवीर्ये क्रोधायमान थइने जमदग्निने मारी नाख्यो. 'शत्रुना पिताने हणवाथी पोतानुं पितासंबंधी दुःख शांत थाय छे'. (६०)

पछी जाज्वल्यमान पर्शुना तेजथी पर्शुरामे कृतवीर्यने मारी नाख्यो. ते साथे समग्र क्षत्रीओने पण मारी नाख्या. (६१) ते वखते कृतवीर्यनी स्त्री तारा सगर्भा हती ते भागी गइ. तेने कोइ तापसे कृपावडे पोताना आश्रमना भोंयरामां राखीने तेनुं रक्षण कर्युं. (६२) अनुक्रमे तेने चौद स्वप्नसूचित पुत्र थयो. ते बाल्यावस्थामां माटी खावा लाग्यो तेथी तापसोए तेनुं नाम सुभूम पाड्युं. (६३)

अहीं पर्शुरामे हस्तिनापुरनुं राज्य स्वीकारीने दुर्धर क्रोधवाळा तेणे सात वार निःक्षत्रिय (क्षत्रीविनानी) पृथ्वी करी. (६४) अन्यदा क्षत्रियोने शोधतो राम सुभूमथी अलंकृत आश्रममां आव्यो. त्यां तेनी पर्शु के जे क्षत्रियने देखीने जाज्वल्यमान थती हती ते क्रोध करीने जाज्वल्यमान थइ. (६५) एटले तेणे कुलपतिने पूछ्युं के–'अहीं कोइ पण क्षत्रिय छे ?' कुलपतिए कह्युं के–'आ तापसो क्षत्रियो ज छे.' आम कहेवाथी

क्रुधः ॥ ६६ ॥ हतानां क्षत्रियेंद्राणां दंष्ट्रिकाभिरबीभरत् । स्थालमेकं महद्रामः संग्रामोद्दामदोर्मदः ॥ ६७ ॥ य एताः पायसीभूताः भोक्ष्यते स त्वदंतकः । इति नैमित्तिकेनोक्तो रामस्तन्निर्णिनीषया ॥ ६८ ॥ अवारितं पुरे सत्रा–गारं निर्माय तत्र च । दंष्ट्रास्थालांकितं सिंहा–सनमाद्वावतिष्ठिपत् ॥ ६९ ॥

विद्याधरो मेघनादः सुतां पद्मश्रियं ददौ । सुभूमाय निमित्तज्ञ–गिरा तं चक्रिणं विदन् ॥ ७० ॥ सुभूमस्तातवृत्तांतं ज्ञात्वा गदितमंबया । क्रुद्धो रामं संजिहीर्षु–र्द्राग् ययौ हस्तिनापुरं ॥ ७१ ॥ गत्वा सिंहासने तस्मिन्निषण्णः सिंहशाववत् । दंष्ट्रास्ताः पायसीभूता बुभुजे च भुजोर्जितः ॥ ७२ ॥ हतेषु मेघनादेन तदारक्षिद्विजातिषु । रामोऽप्यागात्तत्र काल–दूताहूत इव द्रुतं ॥ ७३ ॥ मुक्तः सुभूमे रामेण परशुः प्रज्ज्वलन्नपि । स्वयमेव शशामाशु न्यायभाजीव दुर्जनः ॥ ७४ ॥ चक्रत्वी-

---

तेनो क्रोध विराम पाम्यो. ( ६६ ) संग्रामोने विषे उद्दाम दोर्मदवाळा पर्शुरामे पोते हणेला क्षत्रियेंद्रोनी दाढाओवडे एक मोटो थाळ भर्यो. ( ६७ ) 'जेना जोवाथी आ दाढाओ खीर जेवी थइ जशे अने ते खीरनुं जे भोजन करशे ते तने मारनार थशे' एम नैमित्तिके कहेलुं होवाथी रामे तेनो निर्णय करवा माटे ते नगरमां एक अवारित एवी कोइने अटकायत नहीं करनारी दानशाळा शरु करी अने तेना मुखद्वारपासे ज ए दाढावाळा स्थाळयुक्त एक सिंहासन स्थापन कर्युं. ( ६८–६९ )

अहीं मेघनाद नामना विद्याधरे निमित्तज्ञनी वाणीथी सुभूमने चक्री थनार जाणीने पोतानी पद्मश्री नामनी पुत्री तेनी साथे परणावी. ( ७० ) पोतानी माताना कहेवाथी पोताना पितासंबंधी वृत्तांत जाणीने क्रोधायमान थयेल सुभूम पर्शुरामने हणवा माटे एकदम हस्तिनापुर गयो. ( ७१ ) ते दानशाळापासे गयो अने त्यां सिंहासन पडेलुं जोइने सिंहना बाळकनी जेम तेनी उपर बेठो. तेना जोवाथी ज दाढा खीररूप थइ गइ एटले बळवान भुजावाळो ते बधी खीर खाइ गयो. ( ७२ ) मेघनाद तेनी साथे आवेलो हतो तेणे ते दानशाळाना रक्षक ब्राह्मणोने मारी नाख्या. ए हकीकत जाणीने काळदूते बोलाव्यो होय तेम पर्शुराम तरत ज उतावळो त्यां आव्यो. ( ७३ ) आवतां वेंत ज तेणे जाज्वल्यमान पर्शु सुभूमउपर मूक्यो; परंतु न्यायवान पासे दुर्जन शांत थइ जाय तेम ते स्वयमेव शांत थइ गइ. ( ७४ ) एटलामां तो चक्ररत्नपणे परिणमी गयेल थाळरूपचक्र

भवत्स्थालं सुभूमप्रेरितं ततः । शिरश्चिच्छेद रामस्य पुण्यतः किं न संभवेत् ॥ ७५ ॥

त्रिःसप्तकृत्वो निर्विप्रं स चकार महीतलं । वैरनिर्यातनं कुर्व–त्रिगुणं मत्सरोल्वणः ॥ ७६ ॥ निर्जिताशेषषट्खंडः स चंडक्रोधदुर्द्धरः । विप्रघातान्निववृते न मनागपि निर्दयः ॥ ७७ ॥ सोऽन्यदा धातकीखंड–भरतं जेतुमुत्सुकः । निवारितोऽपि मंत्र्याद्यै–र्भृशं दुःशकुनैरिव ॥ ७८ ॥ रत्नेन चर्मणांभोधिं तरीतुमुपचक्रमे । अभूच्च बुद्धिर्देवानां चर्मरत्नभृतां तदा ॥ ७९ ॥ बिभ्रत्येवेदमन्येऽमी विश्राम्यामि क्षणं त्वहं । युगपच्चिंतयित्वेति सर्वैस्तन्मुमुचे श्लथं ॥ ८० ॥ ततः स चर्मणा तेन पापेनेव गरीयसा । ममज्ज वार्द्धौ देहेन दुर्गतावात्मना पुनः ॥८१॥ तथोक्तं–तुर्यात्कषायात्पंचत्वं प्राप्य षट्खंडभूपतिः । सप्तमं नरकं प्राप–दष्टमश्चक्रवर्त्यसौ ॥८२॥ अष्टाविंशतिकोदंडो–त्तुंगदेहोऽयमीरितः । षष्टिवर्षसहस्रायुश्चामीकरतनुद्युतिः ॥ ८३ ॥ इति सुभूमः ॥

---

सुभूमे राम उपर मूक्युं, तेथी रामनो शिरच्छेद थइ गयो. 'पुण्यथी शुं संभवतुं नथी ?' (७५)

पछी ते सुभूमे त्रण सप्तक एटले २१ वार पृथ्वीतळने ब्राह्मणरहित कर्युं. 'तीव्र रोषथी वेरनुं निर्यातन त्रणगणो बदलो वाळे त्यारे थाय छे.' (७६) प्रचंड क्रोधथी दुर्धर एवो ते निर्दय सुभूम समस्त छ खंडने साध्या छतां विप्रना घातथी किंचित् पण निवर्त्यो (पाछो वळ्यो) नहीं. (७७) अन्यदा धातकीखंडना भरतने जीतवाने ते उत्सुक थयो. दुःशकुननी जेम मंत्री वगेरेए बहु रीते वार्यो छतां चर्मरत्नवडे लवणसमुद्र तरी जवाने ते तैयार थयो. (अने बधुं लश्कर चर्मरत्नपर चडावीने चाल्यो) ते वखते चर्मरत्नने उपाडनारा दरेक देवोनी आवी बुद्धि थइ (७८–७९) के–'आ रत्नने बीजा देवो उपाडे छे तेथी हुं क्षणमात्र विसामो लउं.' आ प्रमाणे समकाळे सर्वे (हजारे) देवोनी एवी बुद्धि थवाथी बधा देवोए ते चर्मरत्न छोडी दीधुं. (८०) महापापथी जेम संसारसमुद्रमां डूबी जाय तेम ते चर्मरत्नसहित सुभूम चक्री शरीरवडे समुद्रमां डूबी गयो अने आत्मावडे नरकमां गयो. (८१) कह्युं छे के–'चोथा कषाय (अनंतानुबंधी लोभ) थी छ खंडनो राजा आठमो चक्रवर्ती सुभूम सातमी नरके गयो.' (८२) ते अट्ठावीश धनुष्य उंचा देहवाळो, साठ हजार वर्षना आयुवाळो अने सुवर्ण जेवी देहनी कांतिवाळो हतो. (८३) इति सुभूमः ८

सिद्धा एवंविधाः प्रोक्ताः पंचमांगे जिनेश्वरैः ॥ ३४ ॥ ' सिद्धे नो चरित्ती ' इत्यादि च तत्सूत्रं. सम्यक्त्वं चायिकमथ केवले ज्ञानदर्शने । इत्येतत्त्रयमाश्रित्य क्षायिकः साद्यनंतकः ॥ ३५ ॥ शेषौ तु भंगकावत्र शून्यावेव स्थितावुभौ । अनादिसांतोऽनाद्यंतः क्षायिकः संभवेन्न यत् ॥ ३६ ॥ इच्छंति सिद्धस्याप्यन्ये चारित्रं लब्धिपंचकं । सिद्धत्वेऽपि हि निर्मूल-मेतदावरणक्षयात् ॥ ३७ ॥ एषामावरणाभावे-ऽप्यसत्त्वं यदि कल्प्यते। क्षीणमोहादिकेष्वेवं तदभावः प्रसज्यते ॥३८॥ तदेतन्मतमाश्रित्य चारित्रे लब्धिपंचके । सिद्धेषु स्वीकृते साद्य-नंतः स्यात्क्षायिकः परं ॥ ३९ ॥ शेषा भंगात्रयः शून्याः चायिकस्याप्यपेक्षया। भंगव्यवस्था क्रियते क्षायोपशमिकेष्वथ ॥ ४० ॥

छाद्मस्थिकानि ज्ञानानि चत्वार्याश्रित्य निश्चितं । क्षायोपशमिको भावः सादिः सांत इति स्मृतः ॥ ४१ ॥ भंगो द्वितीयः शून्योऽत्रा-प्येषां सम्यक्त्वसंश्रयात् । यदुत्पात्तोंतश्च पुन—मिथ्यात्वे केवलेऽपि च ॥४२॥

---

चरित्री, न अचरित्री, न चरित्राचरित्री-एवा प्रकारना पांचमां अंगमां श्रीजिनेश्वरे कहेला छे.(३४) "सिद्धे नो चरित्ती." इत्यादि ते विषयनुं सूत्र छे. चायिक सम्यक्त्व अने केवळज्ञान तथा केवळदर्शन ए त्रण भेदने आश्रयीने चायिकभाव सादिअनंत भांगे छे. ( ३५ ) बाकीना बे भंग आ भावमां शून्य छे, कारण के अनादिसांत अने अनादिअनंत ए बंने भांगा चायिकभावमां संभवता नथी. ( ३६ ) अन्य आचार्यो सिद्धने पण चारित्र अने दानादि लब्धिपंचक इच्छे छे, केमके सिद्धत्वमां एना आवरणोनो समूळ नाश थयेलो छे, ( ३७ ) अने एना आवरणनो अभाव सते पण जो तेनुं असत्त्वपणुं मानीए तो चीणमोहादिने विषे पण तेनो अभाव प्राप्त थशे. ( ३८ ) एमना मतने आश्रयीने चारित्र ने दानादि लब्धिपंचक सिद्धमां स्वीकारीए तो ते ते छ प्रकारनो चायिकभाव पण सादिअनंत भांगे गणी शकाय. ( ३९ ) एटले बाकीना त्रणे भंग चायिकनी अपेक्षाए शून्य गणाय. हवे क्षायोपशमिकने आश्रयीने भंगव्यवस्था कहे छे. ( ४० )

छाद्मस्थिक चार ज्ञानने आश्रयीने निश्चये चायोपशमिक भाव सादि सांत ज कहेलो छे ( ४१ ) बीजो भांगो अहीं पण शून्य समजवो. कारण के ते (ज्ञानो)नी उत्पत्ति समकितने आधीने छे अने तेनो अंत पाछो मिथ्यात्वे थाय त्यारे अथवा केवळज्ञान पामे त्यारे थाय छे. ( ४२ ) मतिअज्ञान ने श्रुतअज्ञान भव्यनी अपेक्षाए अनादि-

मत्यज्ञानश्रुताज्ञाने स्यातां भव्यव्यपेक्षया । अनादिसांते तुर्ये च भंगेऽभव्यव्यपेक्षया ॥ ४३ ॥ क्षायोपशमिकोऽचक्षु–र्दर्शनापेक्षया भवेत् । भंगे तृतीये भव्याना–मभव्यानां तुरीयके ॥ ४४ ॥ विभंगज्ञानमवधि–चक्षुषी किल दर्शने । दानाद्या लब्धयः पंच संयमौ देशसर्वतः ॥ ४५ ॥ सम्यक्त्वमेषामित्येका–दशानां च व्यपेक्षया । क्षायोपशमिको भावः साद्यंतः केवलं भवेत् ॥ ४६ ॥ विशेषावश्यकसूत्रवृत्त्योस्तु केनापि हेतुना षण्णामेव क्षायोपशमिकानां भंगकव्यवस्थोक्ता, ततः शेषाणामचक्षुर्दर्शनादीनां द्वादशानां यथासंभवमस्माभिर्लिखितेति ज्ञेयं.

पारिणामिकभावोऽपि सर्वपुद्गलगोचरः । सादिः सांतश्च विज्ञेयः पर्यायपरिवृत्तितः ॥ ४७ ॥ शून्य एव भवेद्भंगो द्वितीयोऽत्रापि पूर्ववत् । सादीनां द्व्यणुकादीनां ह्यनंतत्वमसंभवि ॥ ४८ ॥ तथा भवति भव्यत्वमाश्रित्य पारिणामिकः । अनादिसांतः सिद्धा हि नाभव्या न च भव्यकाः ॥ ४९ ॥ तथोक्तं–' सिद्धे न भव्वे नो अभव्वे ' इति. अभव्यत्वं च जीवत्वं चाश्रित्यानाद्यनंतकः । स्यात्पारिणामिको भावो–ऽन-

---

सांत छे अने अभव्यनी अपेक्षाए चोथे भांगे एटले अनादिअनंत छे. ( ४३ ) अचक्षुदर्शनसंबंधी क्षायोपशमिक भाव भव्योने त्रीजे भांगे छे अने अभव्योने चोथे भांगे छे ( ४४ ) विभंगज्ञान अने अवधि तथा चक्षुदर्शन, दानादि पांच लब्धि अने देशविरति ने सर्वविरति तथा सम्यक्त्व–ए अग्यार प्रकारने अंगे क्षायोपशमिकभाव केवळ सादिसांत भांगे छे. ( ४५–४६ ) विशेषावश्यकसूत्र ने तेनी वृत्तिमां कोइ पण हेतुए छ ज क्षायोपशमिकना प्रकारनी भंग व्यवस्था कही छे ( एटले अमे छ भेदनी विवक्षा ते प्रमाणे कही छे ) अने बाकीना अचक्षुदर्शनादि बार प्रकारनी भंगव्यवस्था यथासंभव अमे लखी छे एम समजवुं.

पारिणामिकभाव के जे सर्व पुद्गलगोचर छे ते पर्यायनी परावृत्तिथी सादिसांत छे. (४७) बीजो भंग अहीं पण पूर्ववत् शून्य छे, कारण के द्व्यणुकादि स्कंधोनुं मादिपणुं छे, तेथी तेनुं अनंतपणुं असंभवित छे. (४८) भव्यत्व आश्री पारिणामिकभाव अनादिसांत भांगे छे, कारण के सिद्धो अभव्य पण नथी अने भव्य पण नथी. (४९) कह्युं छे के–" सिद्धे नो भव्वे नो अभव्वे" इति. अभव्यत्व अने जीवत्वने आश्रयीने पारिणामिकभाव अनादिअनंत छे. कारण के ए बेनो उद्भव के क्षय नथी. (५०) आ प्रमाणे

योर्यन्नोद्भवच्चयौ ॥ ५० ॥ एवमुक्तचतुर्भंग्या या भावानामवस्थितिः । सा भावकाल इत्युक्तो महाभाष्यप्रणेतृभिः ॥ ५१ ॥ साईसपज्जवसिओ चउभंगविभागभावणा एत्थ । उदइयाईयाणं तं जाणसु भावकालं तु ॥ ५२ ॥ इत्याद्यर्थतो विशेषावश्यकसूत्रवृत्त्योः ।

भावानां भगवदुपज्ञशास्त्रदृष्ट्या, दिग्मात्रं गदितमिहातिमात्रतुष्ट्या ।
पूर्णेऽस्मिन्निति गुणभाजि भावलोके, ग्रंथोऽयं समुदवहत्समाप्तिलक्ष्मीं ॥ ५३ ॥

विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिप-
द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ।
काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे,
षट्त्रिंशत्तम एष निर्भररसः सर्गः समाप्तः सुखं ॥ ५४ ॥

इति श्रीलोकप्रकाशे षट्त्रिंशत्तमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

कहेली चार भंगीवडे भावोनी जे अवस्थिति कही तेने ज महाभाष्यना प्रणेताओए भावकाळ कहेलो छे. (५१) तेमणे कह्युं छे के—साईसपज्जवसिओ, चउभंगविभागभावणा एत्थ। उदइयाईयाणं, तं जाणसु भावकालं तु ॥ ५२ ॥ इत्यादि अर्थथी विशेषावश्यकसूत्रवृत्तिमां कहेल छे.

भगवंतना कहेला शास्त्रनी दृष्टिवडे करीने अहीं अमे भावोनुं दिशामात्र स्वरूप अति हर्षवडे कह्युं छे. गुणना भाजनरूप आ भावलोक पूर्ण थये सते आ ग्रंथ पण समाप्तिरूपी लक्ष्मीने प्राप्त थाय छे. (५३)

विश्वने आश्चर्य आपनार छे कीर्त्ति जेमनी एवा श्रीकीर्त्तिविजय उपाध्यायना शिष्य अने राजश्री ने तेजपाळना पुत्र विनयवंत विनयविजये कहेला निश्चित एवा जगतना तत्त्वने प्रदर्शित करवामां दीपकसमान आ लोकप्रकाश ग्रंथमां निर्भर रसवाळो आ छत्रीशमो सर्ग सुखे समाप्त थयो छे. (५४)

॥ इति श्रीलोकप्रकाशे ३६ मो सर्ग समाप्त ॥

## ॥ अथ सप्तत्रिंशत्तमः सर्गः प्रारभ्यते ॥

पार्श्वं शंखेश्वरोत्तंसं प्रणम्य परमेश्वरं । लोकप्रकाशग्रंथस्य करोम्युक्तार्थबीजकं ॥ १ ॥ मंगलाचरणं ताव-दभिधेयप्रयोजने । शिष्टप्रसादनौद्धत्य-त्यागो ग्रंथस्य नाम च ॥२॥ अंगुलयोजनरज्जु-पल्याब्धिनिरूपणानि गुणाकारः । भागाहृतिसंख्येया-संख्यानंतानि चादिमे सर्गे ॥ ३ ॥ द्रव्यक्षेत्रकालभाव-लोकानां नाममात्रतः । आख्याथ धर्माधर्माभ्र-सिद्धाख्यातिर्द्वितीयके ॥ ४ ॥ द्वारैः सप्तत्रिंशता यै-रुक्ताः संसारिणोंगिनः । सर्गे तृतीयके तेषां द्वाराणामस्ति विस्तृतिः ॥ ५ ॥ पृथ्वीकायादयः सूक्ष्माः सर्गे तुर्येऽथ पंचमे । त एव बादराः षष्ठे तिर्यंचो द्वींद्रियादयः ॥ ६ ॥ मनुष्याः सप्तमे देवा अष्टमे नवमे पुनः । नारका दशमे जन्म-संवेधः सर्वदेहिनां ॥ ७ ॥ महाल्पबहुताकर्म-प्रकृतीनां च कीर्तनं ।

---

## सर्ग ३७ मो.

श्रीशंखेश्वरमंडन परम ऐश्वर्यवान श्रीपार्श्वनाथ परमात्माने नमस्कार करीने श्रीलोकप्रकाश ग्रंथनुं बीजक-पूर्वे कही गयेल हकीकतनी अनुक्रमणिका कहुं छुं. ( १ )

मंगळाचरण, अभिधेय, प्रयोजन, शिष्टप्रसादन, औद्धत्य त्याग, ग्रंथनुं नाम, ( २ ) अंगुळ-योजन-रज्जु-पल्योपम ने सागरोपमनुं स्वरूप, गुणाकार, भागाकार, संख्येय, असंख्येय ने अनंतना प्रकारो विगेरे प्रथम सर्गमां कह्युं छे. ( ३ )

बीजा सर्गमां द्रव्यलोक, क्षेत्रलोक, काळलोक ने भावलोकनुं नाममात्र आख्यान अने धर्मास्तिकाय, अधर्मास्तिकाय, आकाशास्तिकाय ने सिद्धनुं स्वरूप बतावेलुं छे. (४)

त्रीजा सर्गमां जे ३७ द्वारोवडे संसारीजीवोनुं स्वरूप बताववानुं छे ते ३७ द्वारनो विस्तार-तेनुं स्वरूप बतावेलुं छे (५)

चोथा सर्गमां पृथ्वीकायादि पांच सूक्ष्म स्थावरनुं स्वरूप कह्युं छे.

पांचमा सर्गमां पृथ्वीकायादि पांच बादर स्थावरनुं स्वरूप कह्युं छे.

छठ्ठा सर्गमां द्वींद्रियादि तिर्यंचोनुं, सातमा सर्गमां मनुष्योनुं, आठमा सर्गमां देवोनुं, नवमा सर्गमां नारकोनुं अने दशमा सर्गमां सर्व जीवोना जन्मनो संवेध कह्यो छे. (६-७) तेमज दशमा सर्गमां मोटो अल्पबहुत्व अने कर्मप्रकृतिओनुं स्वरूप कह्युं छे तथा

एकादशे पुद्गलास्ति–कायस्वरूपवर्णनं ॥ ८ ॥ इति द्रव्यलोकः ।

क्षेत्रलोकेऽथ लोकस्य सामान्येन निरूपणं । दिशां निरूपणं लोके रज्जुखंडुककीर्तनं ॥ ९ ॥ संवर्त्तितस्य लोकस्य स्वरूपं च निदर्शनं । महत्तायामस्य रत्न–प्रभापृथ्वीनिरूपणं ॥ १० ॥ व्यंतराणां नगरादि–समृद्धिपरिकीर्त्तनं । इत्यादि द्वादशे सर्गे सविशेषं निरूपितं ॥ ११ ॥ स्वरूपं भवनेशानां तदिंद्राणां च वर्णिता । सामानिकाग्रपत्न्यादि–संपत्सर्गे त्रयोदशे ॥ १२ ॥ चतुर्दशे च सप्तानां नरकाणां निरूपणं । प्रस्तट-स्थितिलेश्यायु–र्वेदनाद्युक्तिपूर्वकं ॥ १३ ॥ सर्गे पंचदशे तिर्य–ग्लोके द्वीपाब्धिशंसनं । जंबूद्वीपस्य जगती–द्वारतत्स्वामिवर्णनं ॥ १४ ॥ क्षेत्रस्य भरतस्याथ वैताढ्यस्य च भूभृतः । सगुहस्य सकूटस्य गिरेर्हिमवतोऽपि च ॥ १५ ॥ पद्मह्रदस्य श्रीदेव्या गंगादिसरितामपि । दाढानगांतरद्वी-

---

अग्यारमा सर्गमां पुद्गलास्तिकायना स्वरूपनुं वर्णन छे. (८) आ रीते ११ सर्गमां द्रव्यलोक पूर्ण थाय छे.

क्षेत्रलोकमां–बारमा सर्गमां सामान्यथी क्षेत्रनुं निरूपण, दिशानुं निरूपण, लोकमां रज्जु अने खंडुकनुं स्वरूप, संवर्तित लोकनुं स्वरूप अने तेनी महत्ता ने आयामउपर दृष्टांत तथा रत्नप्रभा विगेरे पृथ्वीनुं निरूपण, व्यंतरोनी नगरादि समृद्धिनुं परिकिर्त्तन–आ सर्व सविशेषपणे निरूपित करेल छे. ( ९–११ )

तेरमा सर्गमां भुवनपतिनुं स्वरूप तथा तेना इंद्रोना नाम तथा तेना सामानिक देवो, अग्रमहिषीविगेरेनी संपदा विस्तारथी कही छे. ( १२ )

चौदमा सर्गमां सात नरकनुं निरूपण तेना प्रस्तर, दरेक प्रस्तरे शरीरस्थिति, लेश्या, आयु अने वेदना विगेरे कहेवापूर्वक बताव्युं छे. ( १३ )

पंदरमा सर्गमां तिर्यक्लोकनुं स्वरूप, असंख्यात द्वीप–समुद्रनुं वर्णन, जंबूद्वीपनी जगतिनुं ने तेना द्वारनुं तेम ज तेना स्वामीनुं वर्णन छे. आ सर्गमां विजयदेवनी ऋद्धिनुं बहु विस्तारथी वर्णन छे. ( १४ )

सोळमा सर्गमां भरतक्षेत्र, वैताढ्यपर्वत, तेनी गुफाओ तथा कूटो, हिमवंतपर्वत, पद्मद्रह, श्रीदेवी, गंगा विगेरे नदीओ, लवणसमुद्रमां नीकळेली बे पर्वतनी आठ दाढाओ, तेनी उपर रहेला अंतरद्वीपो, तेमां रहेला युगलिको, हैमवतक्षेत्र, तेमां रहेल वृत्तवैताढ्य, महाहिमवंतपर्वत, तेनी उपरना द्रहमांथी नीकळती नदीओ अने तेना पर रहेल द्रह ने कूटो,

प–तद्वासियुग्मिवर्णनं ॥ १६ ॥ ततो हैमवतक्षेत्र–तद्वैताढ्याद्रिवर्णनं । ततो महाहिमवतः सरिच्छृंगह्रदस्पृशः ॥ १७ ॥ क्षेत्रस्य हरिवर्षस्य निषधाद्रेश्च वर्णनं । शीताशीतोदयोः पंच–ह्रदवत्योश्च षोडशे ॥ १८ ॥

देवकुरूत्तरकुरु–पूर्वापरविदेहकाः । सामान्यतश्चतुर्धेति महाविदेहवर्णनं ॥ १९ ॥ विजयानां वक्षस्कारां–तर्नदीनां च कीर्त्तनं । विजयेषु च वैताढ्य–षट्खंडनगरीस्थितिः ॥ २० ॥ गंधमादनसन्माल्य–वतोश्च गजदंतयोः । उत्तराणां कुरूणां च विस्तरेण निरूपणं ॥ २१ ॥ यमकाद्र्योर्ह्रदानां च कांचनक्ष्माभृतामपि । जंबूतरोः सकूटस्य साधिपस्य निरूपणं ॥ २२ ॥ सौमनसविद्युत्प्रभ–गजदंतनिरूपणं । स्थितिर्देवकुरूणां च विचित्रचित्रभूभृतोः ॥ २३ ॥ ह्रदानां कांचनाद्रीणां तरोः शाल्मलिनोऽपि च। इत्यादि वर्णनं व्यवस्या सर्गे सप्तदशे कृतं ॥ २४ ॥ मेरुश्चतुर्वनः कूट–मेखलाचूलिकादियुक् । साभिषेकशिलश्चाष्टा–दशे सर्गे निरूपितः ॥ २५ ॥

गिरेर्नीलवतः कूट–ह्रददेव्यादिशालिनः । शीतानारीकांतयोश्च नाममात्रेण वर्णनं ॥ २६ ॥ क्षेत्रस्य रम्यकाख्यस्य रुक्मिणोऽपि च भूभृतः ।

---

हरिवर्षक्षेत्र, निषधपर्वत, शीता शीतोदा नदी अने पांच पांच द्रहोनुं वर्णन छे. (१५–१६)

सतरमा सर्गमां देवकुरु ने उत्तरकुरुक्षेत्र, पूर्व ने पश्चिम महाविदेह, आ प्रमाणे सामान्यथी चार प्रकारना महाविदेहनुं वर्णन, तेमां रहेली विजयो, वृक्षस्कारपर्वतो, अंतर्नदीओ, विजयमां रहेल वैताढ्य, तेना छ खंड अने मुख्य नगरीओ, गंधमादन ने माल्यवंत, गजदंतानुं वर्णन, उत्तरकुरुक्षेत्रनुं विस्तारथी निरूपण, यमकाद्रि, द्रहो, कंचनगिरिओ, जंबूवृक्षनुं तेना कूटोसहित वर्णन, तेना अधिपतिनुं वर्णन, सौमनस ने विद्युत्प्रभ गजदंतानुं वर्णन, देवकुरुक्षेत्रनुं वर्णन, तेमां रहेला चित्र ने विचित्र पर्वतो, द्रहो, कंचनगिरिओ, शाल्मलीवृक्ष विगेरेनुं वर्णन छे. (१७–२४) अढारमा सर्गमां मेरुपर्वतनुं वर्णन, तेना चार वन, तेमां आवेला कूटो, मेरुनी त्रण मेखळा, उपर आवेली चूलिका अने पांडुकवनमां आवेल तीर्थंकरोना जन्माभिषेकनी शिलाओ ने सिंहासनोनुं वर्णन छे.( २५ )

ओगणीशमा सर्गमां नीलवंतपर्वत, तेनी उपर कूटो, द्रह, तेनी अधिष्ठायकदेवी, द्रहमांथी नीकळती शीता ने नारीकांता नदीनुं नाममात्र वर्णन, रम्यकक्षेत्र, रुक्मिपर्वत,

हैरण्यवतवर्षस्य गिरेः शिखरिणोऽपि च ॥ २७ ॥ क्षेत्रस्यैरवताख्यस्य पट्खंडस्य पुरीस्पृशः । वर्णनं च क्षेत्रशैला–दीनां साम्यनिरूपणं ॥ २८ ॥ सर्वाग्रमद्रिकूटानां खेटश्रेणीपुरामपि । नंदीकुंडह्रदादीनां चक्रिरत्नार्हतामपि ॥ २९ ॥ चंद्रसूर्यग्रहादीनां सज्जंबूद्वीपवर्तिनां । एकोनविंशे सर्गेऽत्र सर्वमित्यादि वर्णितं ॥ ३० ॥

विस्तृता पंचभिर्द्वारैः सूर्येंद्वोर्मंडलादिभिः । चाररीतिर्भयोगश्च दिनवृद्धिक्षयादि च ॥ ३१ ॥ ध्रुवराहोः पर्वराहो–स्तिथ्युत्पत्तेश्च शंसनं । द्वारैश्च पंचदशभि–र्नक्षत्राणां निरूपणं ॥ ३२ ॥ इत्यादि विंशतितमे सर्वं सर्गे निरूपितं । एकविंशेऽत्र सर्गेऽथ वर्णनं लवणोदधेः ॥ ३३ ॥ सशिखस्य सपाताल–कुंभस्य द्वीपशालिनः । सुस्थितादिसुराढ्यस्य चंद्रार्कादिद्युतिस्पृशः ॥ ३४ ॥ युग्मं ॥ धातकीखडकालोद–वर्णनं पूर्ववत्ततः । द्वाविंशे वर्णितं सर्गे पृथक्क्षेत्रादिकीर्तनैः ॥ ३५ ॥

तथैव पुष्करार्द्धस्य मानुषोत्तरभूभृतः । ततोऽखिलनरक्षेत्रे क्षेत्रशैलादिसंग्रहः ॥ ३६ ॥ ततः शाश्वतचैत्यानां सर्वसंख्यानिरूपणं । त्रयो-

---

हैरण्यवतक्षेत्र, शिखरीपर्वत, ऐरवतक्षेत्र, तेना छ खंड अने मध्यनी नगरी विगेरेनुं वर्णन, क्षेत्र ने पर्वतादिनुं उत्तरदक्षिणमां साम्यपणुं, तेम ज सर्व पर्वतो, कूटो, विद्याधरनी श्रेणिओ, ते परना नगरो, कुल नदीओ, प्रपातकुंडो, द्रहो, चक्रवर्ती, तेनां रत्नो, अरिहंतो, तथा जंबूद्वीपवर्ती सूर्य, चंद्र, ग्रहादिकनी एकंदर संख्या विगेरे सर्व आपेल छे. (२६–३०)

वीशमा सर्गमां मंडलादिक पांच द्वारवडे सूर्य–चंद्रनी गतिनी रीत विस्तारथी बतावी छे ने तेनी साथे नक्षत्रना योगनुं, दिनवृद्धि ने क्षयादिकनुं, ध्रुवराहुनुं ने पर्वराहुनुं, तिथिनी उत्पत्तिनुं अने पंदर द्वारोवडे नक्षत्रोनुं निरूपण करेलुं छे. ( ३१–३२ )

एकवीशमा सर्गमां लवणसमुद्रनुं, तेनी शिखानुं–पाताळ कळशाओनुं, ए समुद्रमां रहेला द्वीपोनुं, सुस्थितादि देवनुं अने चंद्र–सूर्यादि ज्योतिषीओनुं वर्णन करेलुं छे. (३३–३४)

बावीशमा सर्गमां जुदा जुदा क्षेत्रादिक कहेवावडे धातकीखंडनुं अने कालोदधिनुं पूर्ववत् वर्णन बताववामां आव्युं छे. ( ३५ )

तेवीशमा सर्गमां पुष्करार्धद्वीपनुं ने मानुषोत्तर पर्वतनुं वर्णन आपेलुं छे अने नरक्षेत्र ( अढीद्वीप ) मां आवेला समस्त क्षेत्र अने पर्वतादिकनो संग्रह करेलो छे, तेम

विंशेऽखिलं सर्गे विविच्येत्यादि वर्णितं ॥ ३७ ॥ नृक्षेत्रात्परतश्चंद्र–सूर्यादिश्रेणिकीर्त्तनं । पुष्कराब्धिक्षीरवर–द्वीपाब्ध्यादिनिरूपणं ॥ ३८ ॥ क्रमान्नंदीश्वरद्वीप–चैत्याद्याख्यानविस्तृतिः । इत्याद्युक्तं चतुर्विंशे स्वयंभूरमणावधि ॥ ३९ ॥

पंचविंशे स्थिरचंद्र–ज्योतिश्चक्रव्यवस्थितिः । ऊर्ध्वलोकेऽथ सौधर्मे–शानयोर्देवलोकयोः ॥ ४० ॥ विमानावलयः पुष्पावकीर्णाश्च यथास्थिति । विमानमानप्रासाद–परिपाट्यः सभा अपि ॥ ४१ ॥ उत्पद्यंते यथा देवा अभिषिच्यंत एव ते । पूजयंति यथा सिद्धान् यथा भोगांश्च भुंजते ॥ ४२ ॥ यादृक्स्वरूपा भाषां च यां भाषंते सुधाभुजः । भवंति देव्यो यादृश्यः सेवंते च रतं यथा ॥ ४३ ॥ आहारो यादृगेषामु–च्छ्वासश्च यावदंतरः । यथा मनुष्यलोकेऽमी आयांति स्नेहयंत्रिताः ॥ ४४ ॥ प्रेम्णा वशीकृता यांति यावतीषु महीष्वधः । मध्येमहर्द्धिकं यांति यथावधिदृशो यथा ॥ ४५ ॥ लोकपालाग्र-

---

ज सर्वे शाश्वत चैत्योनी संख्यानुं विस्तार साथे निरूपण कर्युं छे. ( २६–२७ )

चोवीशमा सर्गमां मनुष्यक्षेत्रनी बहार आवेला स्थिर ज्योतिषी पैकी सूर्य चंद्रनी श्रेणिनुं वर्णन कर्युं छे. तथा पुष्करवर समुद्र, क्षीरवरद्वीप, क्षीरवरसमुद्र विगेरेनुं वर्णन, अनुक्रमे आवता नंदीश्वरद्वीपनुं अने ते द्वीपमां आवेला शाश्वता चैत्योनुं विस्तारथी वर्णन अने प्रांते स्वयंभूरमण समुद्र सुधीनुं वर्णन आपेलुं छे. ( ३८–३९ ) पचवीशमा सर्गमां चर अने स्थिर एवा चंद्रादि ज्योतिषीनी व्यवस्थितिनुं सविस्तर वर्णन छे.

छवीशमा सर्गमां ऊर्ध्वलोकनुं वर्णन शरु थाय छे. तेमां सौधर्म ने ईशान देवलोकनी हकीकत, तेना विमानोनी श्रेणिओ, पुष्पावकीर्ण विमानो, तेनुं मान, तेमां प्रासादनी अने सभाओनी परिपाटी, नवो देव केवी रीते उपजे ?, तेना अभिषेकनी हकीकत, तेणे करातो सिद्धोनी पूजा, तेनाथी भोगवाता भोग, देवोना स्वरूपनुं वर्णन, देवो केवी भाषा बोले छे ? देवीओना स्वरूपनुं वर्णन, तेनी साथेना विलासनुं ( कामक्रीडानुं ) वर्णन, तेमनो केवा प्रकारनो आहार ने तेओ आहार अने श्वासोच्छ्वास केटले अंतरे ले छे ? मनुष्यलोकमां स्नेहना आकर्षणथी तेनुं आववुं, प्रेमना वशीकरणथी केटली नरकपृथ्वी सुधी तेनुं जवुं, महर्द्धिक देवस्वरूप, तथा तेमना अवधिज्ञाननुं प्रमाण तथा लोकपाळ,

महिषी–सामानिकादिशालिनोः । शक्तिसंपद्विवरणं सौधर्मेशाननाथयोः ॥ ४६ ॥ षड्विंशतितमे सर्गे इत्याद्यखिलमीरितं ।

सप्तविंशे ततः सर्गे तृतीयतुर्यनाकयोः ॥ ४७ ॥ वर्णनं ब्रह्मलोकस्य तमस्कायस्य मूलतः । कृष्णराजी तद्विमान–लौकांतिकसुधाभुजां ॥ ४८ ॥ स्वर्गस्य लांतकस्याथ सकिल्बिषिकनाकिनः । जमालेश्चरितं शुक्र–सहस्रारादिवर्णनं ॥ ४९ ॥ यावदच्युतनाकस्य कीर्त्तनं रामसीतयोः । चरितं तदनु ग्रैवे–यकानुत्तरवर्णनं ॥ ५० ॥ ततः सिद्धशिलाख्यानं लोकांतस्य च संशनं । इत्यादिवर्णनैरेवं क्षेत्रलोकः समापितः ॥ ५१ ॥ ॥ इति क्षेत्रलोकः ॥

दिष्टलोकेऽथ कालस्य युक्तिव्यक्तिर्मतद्वये । ऋतूनां वर्णनं पण्णां निक्षेपाः कालगोचराः ॥ ५२ ॥ समयावलिकाक्षुल्ल–भवादिपरिकीर्त्तनं । घटीमुहूर्त्तदिवस–पक्षमासादिशंसनं ॥ ५३ ॥ सूर्यर्त्तुचंद्रनक्षत्रा–भिवर्द्धिताह्वयाः क्रमात् । मासा वर्षाण्यथैतेषा–मुपपत्त्यादिवर्णनं

---

अग्रमहिषी ( इंद्राणी ), सामानिक विगेरे देवोथी शोभता एवा सौधर्मेंद्र ने ईशानेंद्रनी शक्ति अने संपत्तिनुं वर्णन विगेरे आपेलुं छे. ( ४०–४६ )

सत्तावीशमा सर्गमां त्रीजा ने चोथा देवलोकनुं वर्णन, पांचमा ब्रह्मदेवलोकनुं वर्णन, तेने अंगे मूळथी नीकळेला तमस्कायनुं, कृष्णराजीनुं अने तेना ( कृष्णराजीना ) अंतरे रहेला लोकांतिकना विमानोनुं वर्णन, लांतक देवलोकनुं वर्णन, अथ प्रकारना किल्बिषिक देवोनुं वर्णन, जमालिनुं चरित्र, शुक्र सहस्रारादि देवलोकोनुं यावत् अच्युत देवलोक सुधीनुं वर्णन, राम–सीतानुं चरित्र, ग्रैवेयक ने अनुत्तर विमानोनुं वर्णन, त्यारपछी सिद्धशिलानुं अने लोकांते रहेला सिद्धोनुं वर्णन आपेलुं छे. आ प्रमाणे १६ सर्गमां ( १२ थी २७ सुधीमां ) क्षेत्रलोक पूर्ण करेलो छे. ( ४७–५१ )

त्रीजा काळलोकमां २८ मा सर्गमां काळने द्रव्य तरीके मानवा संबंधी बे मतने आश्रीने युक्तिनी स्पष्टता, छ ऋतुनुं वर्णन, काळगोचर निक्षेपा, समय, आवली, क्षुल्लकभवनुं वर्णन, घडी, मुहूर्त, दिवस, पक्ष, मास विगेरेनुं वर्णन, सूर्य, ऋतु, चंद्र, नक्षत्र ने अभिवर्द्धित–एम पांच प्रकारना मास, वर्ष अने तेनी उपपत्तिनुं वर्णन, युगनी आदि क्यारे थाय ? दरेक युगमां आवता मास, ऋतु, अयनो ने दिवसोनुं प्रमाण, अधिकमास,

॥ ५४ ॥ युगस्यादिर्युगे मास–र्त्वयनानि दिनानि च । अधिमासा-वमरात्रा–वृत्तयो विषुवंति च ॥ ५५ ॥ करणान्यृत्वयनादे–र्नक्षत्रानयनं विधोः । रवेश्च करणान्येषां बवादिकरणान्यपि ॥ ५६ ॥ पौरुष्यादिपरी-माणं तस्मात्तिथ्यादिनिश्चयः । सर्गेऽष्टाविंशतितमे इत्यादि युग-वर्णनं ॥ ५७ ॥

युगात्प्रभृत्यब्दशत–सहस्रादिक्रमेण च । शीर्षप्रहेलिकांतांक–स्वरू-पप्रतिपादनं ॥५८॥ अरत्रयस्याद्यस्याव–सर्पिण्यां वर्णनं स्थितेः । कल्प-द्रुयुग्मिलोकादे–रेकोनत्रिंश आदृतं ॥ ५९ ॥

अर्हतां पद्धतिः सर्वा निर्वाणावधि जन्मतः । उक्ता त्रिंशत्तमे सर्गे एकत्रिंशे ततः पुनः ॥ ६० ॥ चक्रिदिग्विजयः संप–न्निधिरत्नादिरस्य च । सामान्यतः शार्ङ्गिसीरि–प्रतिविष्ण्वादिकीर्त्तनं ॥ ६१ ॥

सर्गे द्वात्रिंशत्तमेऽथ संक्षेपात्प्राग्भवादितः । जिनानां वृषभादीनां चरित्रस्य निरूपणं ॥ ६२ ॥

एतस्यामवसर्पिण्यां वर्णनं जातजन्मनां । त्रयस्त्रिंशे चक्रिविष्णु–बलदेवादिसन्नृणां ॥ ६३ ॥

---

अवमरात्रिओ ने विषुवत्‌नी आवृत्ति, ऋतु, अयन अने नक्षत्रादि साथे चंद्रमानो योग, तेना करणो, सूर्यना करणो, बीजा बवादि करणो, पौरुषी विगेरेनुं परिमाण, तेनावडे तिथि आदिनो निश्चय विगेरे बतावेल छे. ( ५२–५७ )

२९ मा सर्गमां युगथी मांडीने सो, हजार विगेरेना क्रमथी शीर्षप्रहेलिका सुधीना अंकोनुं निरूपण, अवसर्पिणीना पहेला त्रण आरानुं वर्णन तेम ज कल्पवृक्ष अने युगलि-कादिनुं वर्णन आपेलुं छे ( ५८–५९ ) त्रीशमा सर्गमां जिनेश्वरोनी जन्मथी मांडीने निर्वाणपर्यंतनी सर्व परिस्थितिनुं विस्तारथी वर्णन कर्युं छे. ( ६० ) ३१ मा सर्गमां चक्रवर्तीना दिग्विजयनी हकीकत, तेनी संपत्तिनुं वर्णन, नव निधि ने चौद रत्नोनुं वर्णन तथा वासुदेव, बळदेव ने प्रतिवासुदेवनुं सामान्य वर्णन आपेलुं छे. ( ६१ ) ३२ मा सर्गमां ऋषभादि जिनेश्वरोनुं पूर्वभवथी मांडीने संक्षेपथी चरित्र वर्णवेलुं छे. ( ६२ )

३३ मा सर्गमां आ अवसर्पिणीमां थयेला चक्रवर्ती, वासुदेव, बळदेव विगेरे सत्पु-

अरस्य पंचमस्याथ स्वरूपेण निरूपणं। अरेऽस्मिन् पंचमे ये चो-द्यास्तत्सूरयश्च ये ॥ ६४ ॥ तेषां नामानि सर्वाग्र-माचार्यादिमहात्मनां। ख्याता ततोऽरके षष्ठे धर्मोच्छेदादिका स्थितिः ॥ ६५ ॥ गिरेः शत्रुंजय-स्याथ वृद्धिहान्यादिशंसनं। विलवासिजनावस्थो-त्सर्पिण्यां च तथो-त्क्रमात् ॥ ६६ ॥ षण्णामराणां पर्याय-वृद्ध्याख्यानं यथाक्रमं। एतदुत्स-र्पिणीभावि-जिनचक्र्यादिकीर्त्तनं ॥ ६७ ॥ इत्यादिकं चतुस्त्रिंशे सर्गे सर्वं निरूपितं।

पंचत्रिंशेऽथ पुद्गल-परावर्त्तश्चतुर्विधः ॥ ६८ ॥ औदारिकादिका कार्म-णांता या वर्गणाष्टधा। अनुभागस्पर्द्धकानि कर्मणां परमाणुषु ॥ ६९ ॥ एषां स्वरूपं मानं चा-तीतानागतकालयोः। संपूर्णो दिष्टलोकोऽय-मि-त्यादिपरिकीर्त्तने ॥ ७० ॥ भावलोकेऽथ भावानां षण्णां सम्यग्निरूपणं। सर्गे षट्त्रिंश इत्येवं भावलोकः समर्थितः ॥ ७१ ॥

एभिर्विचारैर्मणिरत्नसारैः, पूर्णः सुवर्णोघदलंकृतिश्च। समौक्तिक-

---

रुपोनुं चरित्र वर्णवेलुं छे. (६३-६४)

३४ मा सर्गमां आ पांचमा आराना स्वरूपनु निरूपण अने तेमां थनारा उदयो तथा आचार्योनुं वर्णन, तेमनां नामो अने ए महात्माओनी कुल संख्या बतानी छे. त्यारपछी छठ्ठा आराना प्रारंभमां थनार तीर्थोच्छेदादि स्थिति, शत्रुंजयगिरिनी वृद्धि-हानि अने छठ्ठा आरामां बिलवासी थनारा मनुष्यादिनुं वर्णन आप्युं छे तेम ज उत्सर्पिणीमां उत्क्रष्टपणे थनारी सघी स्थिति, पर्यायवृद्धिवडे वधती छए आरानी स्थिति, आवती उत्सर्पिणीमां थनारा जिन तथा चक्री विगेरेनुं वर्णन आपवामां आव्युं छे (६५-६७)

३५ मा सर्गमां चार प्रकारना पुद्गलपरावर्तननुं स्वरूप, औदारिकथी मांडीने कार्मण सुधीनी आठे वर्गणानु स्वरूप, कर्मना परमाणुओमां रहेला अनुभागना स्पर्द्धकोनुं स्वरूप, अतीत, अनागतकाळनु मान इत्यादि परिकीर्त्तनवडे दिष्ट(काळ)लोक संपूर्ण करेलो छे. (६८-७०) ३६ मा सर्गमां भावलोकनुं स्वरूप आपेलुं छे, तेमां छ भावोनुं सम्यक् प्रकारे निरूपण कर्युं छे अने भावलोक समाप्त कर्यो छे. (७१)

उपर जणाव्या प्रमाणे सारभूत विचाररूप मणिरत्नोवडे पूर्ण, सुवर्णना उघत अलंकारवाळो (सारा वर्णो ने अलंकारवाळो), मौक्तिक (सुक्ति) नी शोभावाळो अने वि-

श्रीविबुधादृतोऽयं, ग्रंथोऽस्तु सिद्ध्यै जिनराजकोशः ॥ ७२ ॥ अनाभोगो भूयान्न सदनुभवः शास्त्रविभवो, न सामग्री तादृग् न पटुघना वाक्यरचना । श्रियं सत्यप्येवं यदयमभजद् ग्रंथनृपतिः, कृती हेतुस्तत्रोल्लसति सुमनःकोविदकृपा ॥ ७३ ॥ संतः शास्त्रसुधोर्मिधौतरुचयो ये पूर्णचंद्राग्रजा, वंद्यास्तेऽत्र मया कवित्वकुमुदोल्लासेऽनवद्योद्यमाः । येऽपि द्वेषसितित्विषोऽतिकठिनास्तान्वस्तुतः संस्तुतान् , मन्ये प्रस्तुतकाव्यकांचनकषान् सम्यक्परीक्षाक्षमान् ॥ ७४ ॥

विश्वाश्चर्यदकीर्त्तिकीर्तिविजयश्रीवाचकेंद्रान्तिष-
द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः ।
काव्यं यत्किल तत्र निश्चितजगत्तत्त्वे श्रितः पूर्णतां
सप्तत्रिंश उदीतचिद्रविरुचिः सर्गो निसर्गोज्ज्वलः ॥ ७५ ॥

॥ इति श्रीलोकप्रकाशे सप्तत्रिंशत्तमः सर्गः समाप्तः ॥ तत्समाप्तौ च समाप्तोऽयं श्रीलोकप्रकाशः ॥ श्रीरस्तु ॥

---

बुधजनोए स्वीकारेलो जिनराजना कोशरूपी आ ग्रंथ भव्यजनोनी सिद्धिने माटे हो. (७२)

आ ग्रंथमां सदनुभववाळो शास्त्र विभव नथी, घणे ठेकाणे अनाभोग (स्खलना) थयेल हशे, तेवा प्रकारनी सामग्री नथी, तेम ज एवी सुंदर वाक्यरचना पण नथी; तो पण आ ग्रंथरूपी नृपति जे शोभाने पामे छे तेमा विद्वज्जनोनी कृपा ज उत्तम हेतुभूत छे. ( ७३ ) शास्त्ररूपी अमृतना तरंगोवडे उज्वळ थयेला अने पूर्णचंद्रना वडील बंधु जेवा तेम ज कवितारूपी कमळने विकस्वर करवामां निर्मळ उद्यमवाळा एवा जे सत्पुरुषो छे ते तो मारे वंद्य छे ज, पण जेओ द्वेषरूपी सूर्य जेवा अति कठोर छे तेओने पण प्रस्तुत कवितारूपी सुवर्णने कसवामां कसोटी जेवा—सम्यक् प्रकारे परीक्षा करवामां समर्थ होवाथी वस्तुगतिए हुं स्तवेला ज मानुं छुं. ( ७४ )

सकळ जगत्ने आश्चर्य पमाडनारी छे कीर्ति जेनी एवा कीर्तिविजय उपाध्यायना शिष्य अने माता राजश्री तथा पिता तेजपाळना पुत्र विनयविजय उपाध्याये आ काव्यग्रंथनी रचना करी छे ते जगतना तत्त्वने निश्चय करनारा आ ग्रंथमां उदय पामेला ज्ञानरूपी सूर्यनी कांतिसमान अने स्वभावथी ज उज्वळ एवो आ साडत्रीशमो सर्ग पूर्ण थयो छे. ( ७५ )

॥ इति श्रीलोकप्रकाशे सप्तत्रिंशत्तमः सर्गः समाप्तः । तत्समाप्तौ च समाप्तोऽयं श्रीलोकप्रकाशः ॥ श्रीरस्तु ॥

## ॥ अथ ग्रंथकर्त्तुः प्रशस्तिः ॥

श्रेयः श्रीवर्द्धमानो दिशतु शतमखश्रेणिभिः स्तूयमानः, स दमाभृद्सेव्यपादः कृतसदुपकृतिर्गोपतिर्नूतनो नः। कालेऽप्यस्मिन् प्रदोपे कटुकुमतिकुहूकल्पितध्वांतपोषे, प्रादुष्कुर्वंति गावः प्रसृमरविभवा मुक्तिमार्गं यदीयाः ॥ १ ॥ तत्पट्टेऽथेंद्रभूतेरनुज उदभवच्छ्रीसुधर्मा गणींद्रो, जंबूस्तत्पट्टदीपः प्रभव इति भवांभोधिनौस्तस्य पट्टे । सूरिः शय्यंभवोऽभूत्स मनकजनकस्तत्पदांभोजभानु—स्तत्पट्टैरावतेंद्रो जनविदितयशाः श्रीयशोभद्रसूरिः ॥ २ ॥ तत्पट्टभारधुर्यौ, गणधरवर्यौ श्रियं दधाते द्वौ । संभूतविजयसूरिः, सूरिः श्रीभद्रबाहुश्च ॥ ३ ॥ श्रीस्थूलभद्र उदियाय तयोश्च पट्टे, जातौ महागिरिसुहस्तिगुरू ततश्च । पट्टे तयोः श्रियमुभौ दधतुर्ग-

---

## अथ ग्रंथकर्तानी प्रशस्तिः

शतमख ( इंद्रो–घुवडो ) नी श्रेणिओवडे स्तुति कराता, दमाभृत ( राजाओ–पर्वतो ) वडे जेना पाद ( पग–किरण ) सेवाय छे, तथा जे सर्व प्राणीओ उपर उपकार करे छे एवा नवीन सूर्य जेवा ते श्री वर्धमानस्वामी तमोने कल्याण आपो, के जेनी विस्तारना वैभववाळी गो ( वाणी–किरण ) कटु कुमतिरूपी अमावास्या संबंधी अंधकारनुं ( अज्ञाननुं ) पोषण करनारा आवा प्रदोष ( दोषवाळा–सांजना ) समये पण मुक्तिमार्गने प्रकाशित करे छे. ( १ )

ते श्रीवर्धमानस्वामीनी पाटे श्रीइंद्रभूति (गौतम) गणधरना नाना भाइ (गुरुभाइ) श्रीसुधर्मास्वामी गणधर थया, तेनी पाटना दीपकरूप श्रीजंबूस्वामी थया. तेनी पाटे संसारसमुद्रमां नौकासमान श्रीप्रभवस्वामी थया. तेना चरणकमळने विकस्वर करवामां सूर्यसमान श्रीशय्यंभवसूरि थया. ते मनकना पिता हता. तेनी पाटे ऐरावतेंद्र जेवा अने लोकमां प्रसिद्ध यशवाळा श्रीयशोभद्रसूरि थया. ( २ ) तेनी पाटरूपी भारने वहन करवामां वृषभसमान अने गणधरने विषे श्रेष्ठ एवा श्रीसंभूतविजयसूरि अने श्रीभद्रबाहुसूरि लक्ष्मी ( शोभा ) ने धारण करनारा थया. ( ३ ) ते बन्नेनी पाटे श्रीस्थूलभद्रसूरि उदय पाम्या. त्यारपछी श्रीमहागिरि अने श्रीसुहस्ति

णींद्रौ, श्रीसुस्थितो जगति सुप्रतिबद्धकश्च ॥ ४ ॥ तत्पट्टभूषणमणिर्गुरुरिंद्रदिन्नः, श्रीदिन्नसूरिरथ तस्य पदाधिकारी। पट्टे रराज गुरुर्सिंहगिरिस्तदीये, स्वामी च वज्रगुरुरस्य पदे बभूव ॥ ५ ॥

श्रीवज्रसेनसुगुरुर्विभरांबभूव, पट्टं तदीयमथ चंद्रगुरुः पदेऽस्य। सामंतभद्रगुरुरुन्नतिमस्य पट्टे चक्रेऽस्य पट्टमभजद्गुरुदेवसूरिः ॥ ६ ॥ प्रद्योतनस्तदनु तस्य पदे च मान–देवस्तदीयपदभृद्गुरुमानतुंगः । वीरस्ततोऽथ जयदेव इतश्च देवा–नंदस्ततश्च भुवि विक्रमसूरिरासीत् ॥ ७ ॥ तस्माद्बभूव नरसिंह इति प्रतीतः, सूरिः समुद्र इति पट्टपतिस्तदीयः । सूरिः पदेऽस्य पुनरप्यजनिष्ट मान–देवस्ततश्च विबुधप्रभसूरिरासीत् ॥ ८ ॥ जयानंदः पट्टे श्रियमपुपदस्यास्य च रवि–प्रभस्तत्पट्टेशः समजनि यशोदेवमुनिराट् । ततः प्रद्युम्नाख्यो गुरुरुदयतिस्माथ पुनर–प्यभून्मानादेवो गुरुविमलचंद्रश्च तदनु ॥ ९ ॥ तस्मादुद्योतनाख्यो गुरुरभवदितः

---

नामना गुरु ( सूरि ) थया. ते बन्नेनी पाटे श्रीसुस्थित अने श्रीसुप्रतिबद्धक नामना बन्ने गणींद्रो जगतमां लक्ष्मी ( शोभा ) ने धारण करनार थया. ( ४ ) तेमना पट्टरूपी भूषणना मणिसमान श्रीइंद्रदिन्न नामना गुरु थया. तेना पट्टना अधिकारी श्रीदिन्न नामना सूरि थया. तेनी पाटे श्रीसिंहगिरि नामना गुरु शोभता हता. तेनी पाटे श्री वज्रगुरुस्वामी थया. ( ५ ) तेना पट्टने श्रीवज्रसेन गुरु धारण करता हता. तेने स्थाने श्रीचंद्रगुरु थया. तेना पट्ट उपर श्रीसामंतभद्र गुरु उन्नति करनार थया. तेना पट्टने श्रीदेवसूरि नामना गुरु भजता हता. ( ६ ) त्यारपछी श्रीप्रद्योतनसूरि थया. तेने स्थाने श्रीमानदेवसूरि थया. तेना पट्टने धारण करनार श्रीमानतुंग नामना गुरु थया. त्यारपछी श्रीवीर नामना सूरि थया. त्यारपछी श्रीजयदेवसूरि थया. त्यारपछी श्रीदेवानंदसूरि अने त्यारपछी पृथ्वीपर श्रीविक्रम नामना सूरि थया. ( ७ ) त्यारपछी श्रीनरसिंह नामे प्रसिद्ध सूरि थया. तेना पट्टना स्वामी श्रीसमुद्र नामना सूरि थया. तेने स्थाने श्रीमानदेव सूरि अने त्यारपछी श्रीविबुधप्रभ सूरि थया. ( ८ ) तेना पट्ट उपर श्रीजयानंद सूरि लक्ष्मीनुं पोषण करता हता. तेनी पाटे श्रीरविप्रभ सूरि थया. तेनी पाटना स्वामी श्रीयशोदेव मुनिराज थया. त्यारपछी श्रीप्रद्युम्न नामना गुरु उदय पाम्या. त्यारपछी श्रीमानदेव थया. त्यारपछी श्रीविमलचंद्र गुरु थया. ( ९ ) त्यारपछी श्रीउद्योतन नामना गुरु थया. त्यारपछी श्रीसर्वदेव नामना

सर्वदेवो मुनींद्र—स्तस्माच्छ्रीदेवसूरिस्तदनु पुनरभूरसर्वदेवस्ततश्च । जज्ञाते सूरिराजौ प्रगुणगुणयशोभद्रसन्नेमिचंद्रौ, विख्यातौ भूतलेऽस्मिन्नविरतमुदितौ नूतनौ पुष्पदंतौ ॥ १० ॥ मुनिचंद्रमुनिस्ततोऽद्भुतोऽथा—ऽजितदेवश्च तदंतिपद्वरेण्यः । अपरः पुनरस्य शिष्यमुख्यो, भुवि वादी विदितश्च देवसूरिः ॥ ११ ॥ अजितदेवगुरोरभवत्पदे, विजयसिंह इति प्रथितः क्षितौ । तदनु तस्य पदं दधतावुभा—वभवतां गणभारधुरंधरौ ॥ १२ ॥ सोमप्रभस्तत्र गुरुः शतार्थी, सतां मणिः श्रीमणिरत्नसूरिः । पट्टे मणिः श्रीमणिरत्नसूरे—र्जज्ञे जगच्चंद्रगुरुर्गरीयान् ॥ १३ ॥ तेषामुभावंतिपदावभूतां, देवेंद्रसूरिर्विजयाच्च चंद्रः । देवेंद्रसूरेरभवच्च विद्या—नंदस्तथा श्रीगुरुधर्मघोषः ॥ १४ ॥ श्रीधर्मघोषादजनिष्ट सोम—प्रभोऽस्य शिष्याश्च युगप्रमेयाः । चतुर्दिगुत्पन्नजनावनाय, योधा इव प्राप्तविशुद्धबोधाः ॥१५॥ श्रीविमलप्रभसूरिः, परमानंदश्च पद्मतिलकश्च । सूरिवरोऽप्यथ सोम—

---

मुनींद्र थया. त्यारपछी श्रीदेवसूरि अने त्यारपछी फरीथी श्रीसर्वदेव नामना बीजा सूरि थया. त्यारपछी आ भूतळने विषे प्रसिद्ध जाणे के निरंतर उदय पामेला नवीन सूर्य–चंद्र होय एम घणा गुणवाळा श्रीयशोभद्र अने श्रीनेमिचंद्र नामना सूरिराज थया. ( १० ) त्यारपछी अद्भुत एवा श्रीमुनिचंद्र नामना मुनि थया. त्यारपछी तेना शिष्योने विषे श्रेष्ठ एवा श्रीअजितदेव अने बीजा तेना मुख्य शिष्य श्रीदेवसूरि नामना वादी पृथ्वीमां प्रसिद्ध थया. ( ११ ) तेमांना श्रीअजितदेव गुरुने स्थाने पृथ्वीपर प्रसिद्ध एवा श्रीविजयसिंह सूरि थया. त्यारपछी तेना पट्टने धारण करनारा, गच्छना भारने वहन करवामां धुरंधर एवा बे सूरि थया. ( १२ ) तेमां पहेला श्रीसोमप्रभ गुरु शतार्थी ( एक गाथाना सो अर्थ करनारा ) हता अने बीजा श्रीमणिरत्न सूरि सत्पुरुषोना मणिसमान हता. त्यारपछी श्रीमणिरत्नसूरिना पट्ट उपर मणि समान श्रीजगच्चंद्र नामना मोटा सूरि थया. ( १३ ) तेमना श्रीदेवेंद्रसूरि अने श्रीविजयचंद्रसूरि ए बे मुख्य शिष्यो थया. त्यारपछी श्रीदेवेंद्रसूरिना शिष्य श्रीविद्यानंदसूरि अने श्रीधर्मघोष गुरु थया. (१४) श्रीधर्मघोषनी पछी तेना शिष्य श्रीसोमप्रभसूरि थया. तेने चार दिशामां उत्पन्न थयेला मनुष्योनुं रक्षण करवा माटे योद्धाओनी जेवा चार शिष्यो विशुद्ध बोधने पामेला थया. ( १५ ) तेमना नाम आ प्रमाणे—श्रीविमलप्रभसूरि १, परमानंदसूरी २, पद्मतिलक सूरीश्वर ३,

प्रभपट्टेशश्च सोमतिलकगुरुः ॥ १६ ॥ शिष्यास्त्रयस्तस्य च चंद्रशेखरः, सूरिर्जयानंद इतीह सूरिराट् । स्वपट्टसिंहासनभूमिवासवः, शिष्यस्तृतीयो गुरुदेवसुंदरः ॥ १७ ॥ श्रीदेवसुंदरगुरोरथ पंच शिष्याः, श्रीज्ञानसागरगुरुः कुलमंडनश्च। चंचद्गुणश्च गुणरत्नगुरुर्महात्मा, श्रीसोमसुंदरगुरुर्गुरुसाधुरत्नः ॥ १८ ॥ श्रीदेवसुंदरमुनीश्वरपट्टनेतुः, श्रीसोमसुंदरगुरोरपि पंच शिष्याः । तत्र स्वपट्टवियदंगणभानुमाली, मुख्योतिपद्गणधरो मुनिसुंदराख्यः ॥ १९ ॥ अन्ये श्रीजयचंद्रः, सूरिः श्रीभुवनसुंदराह्वश्च । श्रीजिनसुंदरसूरि–र्जिनकीर्त्तिश्चेति सूरींद्राः ॥ २० ॥ मुनिसुंदरसूरिपट्टभानु–र्गुरुरासीदथ रत्नशेखराख्यः । दधदस्य पदं बभूव लक्ष्मी–पदयुक्सागरसूरिरीश्वरार्च्यः ॥ २१ ॥ सुमतिसाधुगुरुस्तदनु प्रभा–मुद्वहद्दधदस्य पदं प्रभुः । पदमदीदिपदस्य च हेमयुग्–विमलसूरिरुदात्तगुणोदयः ॥ २२ ॥ पट्टे तस्य बभूवुरुग्रतपसो वैरंगिकाग्रेसरा, आनंदाद्विमलाह्वया

---

अने श्रीसोमतिलक नामना गुरु ४, ए सर्वे सोमप्रभसूरिना पट्टेश हता. ( १६ ) ते सोमतिलक सूरिना त्रण शिष्यो हता–श्रीचंद्रशेखरसूरि, श्री जयानंद नामना सूरिराज अने पोताना पट्टरूपी सिंहासन उपर भूमींद्र ( राजा ) समान त्रीजा शिष्य श्री देवसुंदर गुरु थया. ( १७ ) त्यारपछी श्रीदेवसुंदर गुरुना पांच शिष्यो थया–श्री ज्ञानसागर गुरु १, देदीप्यमान गुणवाळा श्रीकुलमंडनसूरि २, महात्मा श्री गुणरत्न गुरु ३, श्री सोमसुंदर गुरु ४ अने श्री साधुरत्न गुरु ५, ( १८ ). त्यारपछी श्री देवसुंदरमुनीश्वरनी पाटना नेता जे श्री सोमसुंदर गुरु हता तेने पण पांच शिष्यो हता. तेमां पोताना पट्टरूपी गगनांगणमां सूर्यसमान मुख्य शिष्य श्री मुनिसुंदर नामना गणधर हता. ( १९ ) बीजा श्री जयचंद्रसूरि, त्रीजा श्री भुवनसुंदर नामना, चोथा श्री जिनसुंदर सूरि अने पांचमा श्री जिनकीर्त्तिसूरींद्र थया. ( २० ) त्यारपछी श्री मुनिसुंदरसूरिना पट्ट उपर सूर्यसमान श्रीरत्नशेखर नामना गुरु थया. तेमना पट्टने धारण करनार अने राजाओने पण पूजवालायक लक्ष्मीशब्दवडे युक्त सागर एटले श्री लक्ष्मीसागर सूरि थया. ( २१ ) त्यारपछी तेना पदने धारण करनार अने साधुओना गुरु श्री सुमति नामना प्रभु ( सूरि ) प्रभाने वहन करता हता, तेना पदने मोटा गुणना उदयवाळा हेमशब्द सहित विमल एटले श्री हेमविमलसूरि दीपाववा लाग्या. ( २२ ) तेनी पाटे उग्र तपवाळा, वैराग्यवंतमां अग्रेसर अने भव्योनो उपकार

गणभृतो भव्योपकारोध्धुराः । ये नेत्रेभशरामृतद्युतिमिते (१५८२) वर्षे क्रियोद्धारत–श्चक्रुः स्वां जिनशासनस्य शिखरे कीर्त्तिं पताकामिव ॥ २३ ॥ प्रमादाभ्रच्छन्नं चरणतरणिं मंदकिरणं पुनश्चक्रे दीप्रं रुचिररुचिरब्दात्यय इव । सृजन् पद्मोल्लासं सुविशदपथश्चंद्रमधुरो, दिदीपे निःपंकः स इह गुरुरानंदविमलः ॥ २४ ॥ विजयदानगुरुस्तदनु द्युतिं, तपगणेऽधिकभाग्यनिधिर्दधौ । श्रुतमहोदधिरेधितसद्विधि-र्विधुयशा जिनधर्मधुरंधरः ॥ २५ ॥ भूपट्टे तस्योल्लसितविजयो हीरविजयो, गुरुर्गीर्वाणौघप्रथितमहिमास्मिन्नपि युगे । प्रबुद्धो म्लेच्छेशोऽप्यकब्बरनृपो यस्य वचसा, दयादानोदारो व्यतनुत महीमार्हतमयीं ॥ २६ ॥ तदनु विजयसेनसूरिराज–स्तपगणराज्यधुरं दधार धीरः । अकब्बरनृपतेः पुरो जयश्री–र्थमवबरीद्गुरुवादिवृंददत्ता ॥ २७ ॥ जयति विजयदेवः सूरिरेतस्य पट्टे,

---

करवामां तत्पर एवा श्रीआनंदविमल नामना गणधर थया. तेमणे संवत १५८२ वर्षे क्रियानो उद्धार करीने जिनशासनना शिखरउपर पताकानी जेम कीर्त्तिने फेलावी हती. (२३) पद्म एटले कमळनो अने बीजा पक्षमां पद्मा एटले ज्ञानादिक लक्ष्मीनो उल्लास करता, निर्मळ मार्गवाळा अने पापरूपी पंकरहित एवा ते आनंदविमल नामना गुरु चंद्रनी जेम मनोहर दीपता हता. शरदृऋतुनी जेम मनोहर कांतिवाळा तेमणे प्रमादरूपी वादळाथी ढंकायेला अने तेथी करीने ज मंद किरणोवाळा (मंद तेजवाळा) चारित्ररूपी सूर्यने देदीप्यमान कर्यो हतो. (२४) त्यारपछी तेमनी पाटे तपगच्छमां अधिक भाग्यना निधिसमान, श्रुतना सागरसमान, सारा विधानने वृद्धि पमाडनार, चंद्र जेवा उज्वळ यशवाळा अने जिनधर्ममां धुरंधर एवा श्रीविजयदान नामना गुरु कांतिने धारण करता हता. (२५) तेमनी पाटे विजयवडे उल्लास पामता श्रीहीरविजय नामना गुरु थया. तेमनो महिमा आ कलियुगमां पण देवोना समूहे विस्तार्यो हतो. तेमना वचनथी म्लेच्छना स्वामी अकबर बादशाह पण बोध पाम्या हता तथा दया अने दानमां उदार एवा तेमणे आखी पृथ्वी अरिहंतना धर्ममय करी हती. (२६) त्यारपछी तेमनी पाटे धीर एवा श्रीविजयसेन सूरिराजे तपगच्छरूपी राज्यनी धूसरीने धारण करी. तेमने अकबर बादशाहनी समक्ष मोटा वादीओना समूहे आपेली जयलक्ष्मी वरी हती. (२७) तेमनी पाटे भ्रुकुटना मणिनी जेम जेनी कीर्तिरूपी कांतिनो प्रताप देदीप्यमान हतो, जेनी मोटी तपलक्ष्मी विस्तार पामी हती एवा तथा शुद्ध बुद्धिवाळा, इंद्रभूति (गौतम) गणधरनी

मुकुटमणिरिवोद्यत्कीर्त्तिकांतिप्रतापः। प्रथितपृथुतपःश्रीः शुद्धधीरिंद्रभूतेः, प्रतिनिधिरतिदक्षो जंगमः कल्पवृक्षः ॥ २८ ॥ तेन श्रीगुरुणाहितो निजपदे दीपोपमोऽदीदिपत्, सूरिः श्रीविजयादिसिंहसुगुरुः प्राज्यैर्महोभिर्जगत् । भूमौ स प्रतिबोध्य भव्यनिवहान् स्वर्गेऽप्यथ स्वर्गिणः, प्राप्तो बोधयितुं गुरौ विजयिनि प्रेमाणमुत्सृज्य नः ॥ २९ ॥ तदनु पट्टपतिर्विहितोऽधुना, विजयदेवतपागणभूभृता । गुणगणप्रगुणोऽतनुभाग्यभूर्विजयते गणभृद्विजयप्रभः ॥ ३० ॥ निर्ग्रंथः श्रीसुधर्माभिधगणधरतः कोटिकः सुस्थितार्या-चंद्रः श्रीचंद्रसूरेस्तदनु च वनवासीति सामंतभद्रात् । सूरेः श्रीसर्वदेवाद्वटगण इति यः श्रीजगच्चंद्रसूरे-र्विश्वे ख्यातस्तपाख्यो जगति विजयतामेष गच्छो गरीयान् ॥ ३१ ॥ इतश्च—

श्रीहिरविजयसूरी-श्वरशिष्यौ सोदरावभूतां द्वौ । श्रीसोमविजयवाचक-वाचकवरकीर्त्तिविजयाख्यौ ॥ ३२ ॥ तत्र कीर्त्तिविजयस्य किं

---

प्रतिकृतिरूप, अति दक्ष अने जंगम कल्पवृक्ष जेवा श्रीविजयदेव नामना सूरि थया. ( २८ ) ते श्रीगुरुए (विजयदेवसूरिए) पोतानी पाटे स्थापन करेला सूरि श्रीविजयसिंह नामना सुगुरु दीपकनी जेम पोताना मोटा तेजवडे जगतने दीपाववा लाग्या. तेओ पृथ्वीपर भव्यजनोना समूहने प्रतिबोध करीने पोताना गुरु विजयमान (विद्यमान) छतां देवोने प्रतिबोध करवा माटे अमारा प्रेमनो त्याग करीने स्वर्गमां प्राप्त थया. ( २९ ) त्यारपछी हमणा श्रीविजयदेव नामना तपगच्छना स्वामीए पोतानी पाटना स्वामी तरीके स्थापन करेला, मोटा गुणसमूहने धारण करनार अने मोटा भाग्यना स्थानरूप श्री विजयप्रभ नामना गणधर विजय पामे छे. ( ३० ).

श्रीसुधर्मा नामना गणधरथी निर्ग्रंथ नामनो गण ( गच्छ ) प्रसिद्ध थयो, श्रीसुस्थित आचार्यथी कोटिक नामनो गण, श्रीचंद्रसूरिथी चंद्र नामनो गण, (वनमां रहेनारा) श्री सामंतभद्रथी वनवासी एवा नामनो गण, श्रीसर्वदेव नामना सूरिथी वट गण एवा नामनो गण प्रसिद्ध थयो; तथा श्रीजगच्चंद्र नामना सूरिथी विश्वने विषे जे तप नामनो गण प्रसिद्ध थयो ते मोटो गच्छ जगतमां विजय पामो. ( ३१ )

अहीं-श्रीहीरविजयसूरीश्वरना बे शिष्यो श्रीसोमविजय वाचक ( उपाध्याय ) अने वाचकवर श्री कीर्तिविजय नामना सहोदर भाइओ हता. ( ३२ ) तेमां चंद्रनी जेवा

स्तुमः, सुप्रभावममृतद्युतेरिव । यत्करातिशयतोऽजनिष्ट म-त्प्रस्तरादपि सुधारसोऽसकौ ॥ ३४ ॥ प्रतिक्रियां कां यदुपक्रियाणां, गरीयसीनामनुसर्तुमीशे । ज्ञानादिदानैरुपचर्य सोऽयं, यैः कल्पितः कीटकणोऽपि कुंभी ॥ ३४ ॥ विनयविजयनामा वाचकस्तद्विनेयः, समदृभदणुशक्तिर्ग्रंथमेनं महार्थं । तदिह किमपि यत्स्यात्क्षुण्णमुत्सूत्रकाद्यं, मयि विहितकृपैस्तत्कोविदैः शोधनीयं ॥ ३५ ॥ सच्छाये सुमनोरमेऽतिफलदे काव्येऽत्र लीलावने, प्राज्ञैर्द्विरमोदके सहृदयश्रेणीमरालाश्रिते । दोषः कंटकिशाखिवद्यदि भवेन्मन्ये गुणत्वेन तं, येन व्यर्थमनोरथस्तदनुदृग् नोष्ट्रः खलः खिद्यते ॥ ३६ ॥

उत्तराध्ययनवृत्तिकारकैः, सुष्टु भावविजयाख्यवाचकैः । [1]सर्वशास्त्रनिपुणैर्यथागमं, ग्रंथ एष समशोधि सोद्यमैः ॥ ३७ ॥ जिनविजयाभि-

---

श्रीकीर्तिविजयना सुप्रभावनी अमे शी रीते स्तुति करी शकीए ? के जेना हाथना (चंद्रपक्षे किरणना ) अतिशयथी - मारा जेवा पत्थरथकी पण आवो अमृतरस झर्यो छे. ( ३३ ) तेमना मोटा उपकारोनो प्रतिकार करवाने माटे हुं ज्ञानादिकना दानथी घणो उपकार करुं तो पण समर्थ थइ शकुं तेम नथी, केमके तेओए मने एक लघुकीटने पण हाथी जेवो करी दीधो छे. ( ३४ ) तेमना शिष्य अल्प शक्तिवाळा विनयविजय नामना उपाध्याये ( में ) आ मोटा अर्थवाळो ग्रंथ रच्यो छे, तेथी आ ग्रंथमां कांइ पण उत्सूत्रादि भूलचूक थइ होय ते मारापर कृपा करीने पंडितोए शुद्ध करवी. ( ३५ ) सारी छायावाळा, अतिमनोहर, मोचादिक मोटा फळने आपनारा, पंडितोरूपी भमराने आनंद आपनारा अने सज्जनोनी श्रेणिरूपी हंसोए आश्रय करेला आ काव्यरूपी क्रीडावनमां जो कदाच कोइक कांटावाळा वृक्षनी जेम दोष रही गयो होय तो तेने हुं गुणकारक (मारो) मानुं छुं, केमके तेथी तेवी दोषदृष्टिवाळो खळरूपी उंट व्यर्थ मनोरथवाळो थइने खेद पामे नहीं. ( ३६ ).

श्रीउत्तराध्ययननी वृत्तिने करनारा अने सर्वशास्त्रमां निपुण एवा श्रीभावविजय नामना उपाध्याये आगमने अनुसरीने यत्नपूर्वक आ ग्रंथ सुधार्यो छे. ( ३७ ) शोधवुं

---

१ पूर्वना ग्रंथने अनुसरीने जे कहेवुं ते तेनी छाया कहेवाय छे.

धगणयो, ग्रंथेऽस्मिन्नकृषतोद्यमं सुतरां । लिखितप्रथमादर्शाः, शोधनलिखनादिपटुमतयः ॥ ३८ ॥ वसुखाश्वेंदुप्रमिते ( १७०८ ), वर्षे हर्षेण जीर्णदुर्गपुरे । राधोज्ज्वलपंचम्यां, ग्रंथः पूर्णोऽयमजनिष्ट ॥ ३९ ॥

एतद्ग्रंथग्रथन–प्रचितारसुकृतान्निरंतरं भूयात् । श्रीजिनधर्मप्राप्तिः, श्रोतुः कर्त्तुश्च पठितुश्च ॥ ४० ॥ द्रव्यक्षेत्रादिभावा य इह निगदिताः शाश्वतास्तीर्थकृद्भि–र्जीवा वा पुद्गला वा कलितनिजकलाः पर्यवापेक्षया ते । यावत्तिष्ठंति तावज्जगति विजयतां ग्रंथकल्पद्रुमोऽयं, विद्वद्वृंदारकार्च्यः प्रमुदितसुमनाः कल्पितेष्टार्थसिद्धिः ॥ ४१ ॥

इति श्रीलोकप्रकाशनामा ग्रंथः संपूर्णः ।

श्रीरस्तु । ग्रंथाग्रं (श्लोकसंख्या) २०६२१ ।

---

अने लखवुं विगेरे कार्यमां निपुण बुद्धिवाळा श्रीजिनविजय नामना गणिए आनी प्रथम प्रत लखीने आ ग्रंथमां घणो सारो उद्यम कर्यो छे. ( ३८ ) संवत १७०८ वर्षे वैशाख शुक्ल पंचमीने दिवसे जीर्णदुर्ग ( जुनागढ ) पुरमां आ ग्रंथ पूर्ण थयो छे. (३९).

आ ग्रंथ रचतां प्राप्त थयेला सुकृतथी श्रोताने, कर्ताने अने भणनारने निरंतर जिनधर्मनी प्राप्ति थाओ. ( ४० ). तीर्थंकरोए आ जगतमां द्रव्य, क्षेत्रादिक जे भावो–पदार्थो कह्या छे तथा जीव अने पुद्गळो जे पोतपोतानी कळा–अंश सहित कह्या छे, ते सर्वे पर्यायनी अपेक्षाए ज्यांसुधी रहे त्यांसुधी उत्तम विद्वानोने पूजवालायक अने देवोने आनंद आपनार तथा इष्ट अर्थनी सिद्धिने करनार आ ग्रंथरूपी कल्पवृक्ष जगतने विषे विजयवंत वर्तो. ( ४१ ).

इति श्रीलोकप्रकाशनामा ग्रंथः संपूर्णः ।